श्रीरम्यजामातृमुनिवर्यचरणसमाश्रितैरष्टदिग्ग-
जान्तर्भूतैश्चरमपर्वनिष्ठाग्रेसरैः
श्रीदेवराजाचार्यवर्यैः प्रसादितम्—

# श्रीवरवरमुनिशतकम् ।

श्रीमहीसारपुराधिष्ठितसकलशास्त्रविदग्रेसरवाधूलकुल-
तिलकश्रीवीरराघवाचार्यप्रसादित-
व्याख्यानसहितम् ।

तच्च
अमदाबादनगरवास्तव्यस्य सम्प्रति सम्प्राप्तश्रीरामानुज-
दिव्यावतारस्थलाधिवासस्य श्रीदेवराज-
रामानुजदासस्य प्रेरणया
मुम्बय्यां
श्रीकृष्णदासात्मजेन क्षेमराजश्रेष्ठिना
स्वीये "श्रीवेङ्कटेश्वर" स्टीम्–यन्त्रालये
मुद्रयित्वा प्रकाशितम् ।

चन्द्राङ्कवसुमिते ( ८९१ ) श्रीरामानुजवत्सरे,
इषुरसनन्देन्दुमिते ( १९६५ ) वैक्रमाब्दे.





## श्रीमते रामानुजाय नमः ।



॥ श्रीमते रामानुजाय नमः ॥

# भूमिका.

श्रीवैष्णवसिद्धान्तसार्वभौमाः ! विदितमेवैतत्सकलविद्वज्जनैर्यत्संसारसागरान्तर्निमग्नजन्तूनां तन्निस्तरणपूर्वकपरब्रह्मप्राप्तये सदाचार्यसमाश्रयणमेवोपाय इति, तदुक्तं "पापिष्ठः क्षत्रबन्धुश्च पुण्डरीकश्च पुण्यकृत् । आचार्यवत्तया मुक्तौ तस्मादाचार्यवान् भवेत्" इति श्रुतिभिश्च "दुर्लभो विषयत्यागो दुर्लभन्तत्त्वदर्शनम् । दुर्लभा सहजावस्था सद्गुरोः करुणां विना" "तद्दर्शनं सदाचार्यमूलम्" इति, एतादृशसदाचार्यलक्षणपूर्त्तिश्च—श्री ६ भगवद्रामानुजमुनीन्द्राणामेवेति श्रीकृष्णपादनिगमान्तदेशिकादिभिः प्रबन्धरूपेण प्रकटीकृतम् । स भगवान् रामानुजयतीन्द्रः पुनरपि सकलजनोज्जीवनकामः सन् "ताम्रपर्णी नदी यत्र" इत्यादिश्रीभागवतोक्तमहिमविशिष्टभूसुरकामप्रदश्रीपराङ्कुशमुनीन्द्रावतारस्थलश्रीनगर्यां श्रीवरवरमुनिरूपेणाऽवततार. सोपि सकलजनैर्विदितः किल, यथोक्तमाचार्यपादैः "हरिस्त्रातुं लोकान् स्वयमवततार स्वकृपया, पुनः पुंसः पूर्वाञ्शठारिपुमुखानप्यजनयत् ॥ अतृप्त्या तावत्याऽप्यभिमतमवातीतरदयं, स नः श्रेयो भूयो रुचिरवरयोगी वितरतु" इति "श्रीमद्रङ्गे वसति विजयी विश्वसंरक्षणार्थं, भूत्वा भूयो वरवरमुनिर्योगिनां सार्वभौमः" इति च श्रीकुरुकापुरीमाहात्म्येऽपि "पुनश्चाहीश्वरः श्रीमान् मन्नियोगान्महीतले । जनिष्यति श्रीनगर्यां यतीन्द्रप्रवणात्मना" इति । स च श्रीमँल्लोकगुरुचरणसमाश्रितश्रीशैलेशदेशिकचरणसरोजराजहंसः किञ्चित्कालानन्तरं गार्हस्थ्याश्रमत्यागपूर्वकं तुरीयाश्रमं स्वीकृत्य "श्रीरङ्गे सुखमास्व" इति श्रीरंगनाथाज्ञानुरोधेन श्रीरंगनगर्यां यथामनोरथमुवास, तथा तस्य "आचार्यो वेदसम्पन्नो विष्णुभक्तो विमत्सरः । योगज्ञो योगनिष्ठश्च सदायोगात्मकः शुचिः ॥ गुरुभक्तिसमायुक्तः पुरुषज्ञो विशेषतः । एवंलक्षणसम्पन्नो गुरुरित्यभिधीयते" इत्यादिशास्त्रोक्तसदाचार्यलक्षणान्यवेक्ष्य बहवः किल महाभागास्तच्चरणारविन्दसंश्रयणेन लब्धात्मानो बभूवुः । तत्र प्रसिद्धाः श्रीवाधूलकुलतिलकश्रीदाशरथिवंशमुक्तामणिश्रीवरदनारायण ( कोइल्अण्णन् ) ( १ ) प्रतिवादिभयंकरवेदान्तगुरु ( प्रतिवादिअण्णा ) ( २ ) श्रीतोताद्रिरामानुजमुनि ( ३ ) श्रीवेंकटरामानुजमुनि ( ४ ) परवस्तुभट्टनाथमुनि ( ५ ) देवराजगुरु ( ६ )

आप्पिळ्ळै अप्पिळ्ळान् नामाचार्या ह्यष्टदिग्गजाः तेषु यथा परांकुशविषये मधुरकविः
यथा रामानुजविषये ह्यान्ध्रपूर्णः तथाऽस्मिन्देवराजगुरुः अस्य चावतारस्थलम्
उत्तरश्रीरंगाभिधेयं घटिकाचलसमीपस्थम् एरुम्बिक्षेत्रम्, अत एवास्य 'एरुम्बि अप्पा'
इति द्राविडनामधेयमासीत् अस्य च महागुरोश्चरित्रं यतीन्द्रप्रवणविभवाख्यमाणिप्रवालप्र-
बन्धे सुस्पष्टम् । 'गुरुं प्रकाशयेद्धीमान्' इत्युक्तानुसारेण श्रीदेवराजगुरुणा चरमशेषिणः
श्रीवरवरमुनेर्वैभवमनेकग्रन्थरूपेण प्रकटीकृतम् ते च ग्रन्थाः–दिनचर्या ( १ ) श्रीवर-
वरमुनिशतकम् ( २ ) वरवरमुनिकाव्यम् ( ३ ) वरवरमुनिचम्पू ( ४ ) वरवरमुनिमं-
गलाशासनम् (५) वरवरमुनि–आर्तिप्रबन्धः (६) श्रीवरवरमुन्यष्टकम् (७) इत्यादयः
भाष्यकारमंगलाशासनम् ( ८ ) रामानुजाष्टकम् ( ९ ) प्रार्थनापञ्चकम् ( १० )
लोकार्यविंशतिः ( ११ ) ऋद्धिस्तवः ( १२ ) सन्मार्गदर्पणम् ( १३ ) विलक्षणमो
क्षाधिकारिनिर्णयः ( १४ ) लक्ष्मीपरिणयनाटकम् ( १५ ) वरदराजमंगलाशासनम्
( १६ ) इत्यादयोऽन्येपि श्रूयन्ते । अस्य वरवरमुनिशतकस्य टीकाकारस्सुगृहीतनामधे
यश्रीवाधूलवीरराघवाचार्यः श्रीभक्तिसारावतारस्थलं महीसारपुरमध्यतिष्ठत्, एतत्कृता
ग्रन्था अपि बहवो दृश्यन्ते ते च कठिनपददीपिका श्रीवचनभूषणव्याख्या ( १ )
पलनडे विळक्कम् ( २ ) सूक्तिसाधुत्वमाला ( ३ ) वचःसुधामीमांसा ( ४ ) तत्त्व-
सुधा ( ५ ) महावीरचरितव्याख्या ( ६ ) दुष्करश्लोकटिप्पणी ( ७ ) इत्यादयः ।

इदञ्च सव्याख्यानं श्रीवरवरमुनिशतकं श्रीरम्यवरयोगिकृपाफलैः श्रीमदायोध्य-
यतीन्द्ररामानुजजीयर्स्वामिभिः श्रीपेरुम्बूदूर भट्टगोत्रम्–श्रीवेङ्कटरामानुजाचार्यवर्यस्यैकं
महीसारपुरस्थश्रीतातप्पंगाराख्याचार्यवर्यस्यान्यम् एवं पुरातनतालपत्रात्मकद्राविडाक्षरपु-
स्तकद्वयमवलम्ब्य देवनागराक्षरैर्यथोचितं समीक्ष्य परिशोध्य परिष्कृत्य च देवराजरामा-
नुजदासाय सादरं दत्तम्, तेन च मुम्बईपत्तने श्रीकृष्णदासात्मजखेमराजस्य श्रीवेङ्कटे
श्वरनाम्नि महामुद्रणालये मुद्रापयित्वा प्रकाशितम् ।

---

# देवराजरामानुजदासस्य जीवनचरितसङ्क्षेपः ।

अथ कोयं देवराजरामानुजदासः? येन चरमपर्वनिष्ठप्रीतिजनकं श्रीवरवरमुनिशतकं स-
व्याख्यानं मुद्रापितमिति जिज्ञासायां तज्जीवनचरितं संग्रहेणोच्यते; यद्यपि नाहं तेन तदीयेन
शरीरसम्बन्धिना वा मनागप्यस्मिन् विषयेऽभिहितोऽस्मि तथापि दैवान्मोहमयीपत्तनं समा-
गतेन मया 'श्रीभूतपुराद्देवराजरामानुजदासेन सव्याख्यानं श्रीवरवरमुनिशतकं मुद्रणा-
र्थे प्रेषितम्' इति श्रुतम्, व्याख्यानदिदृक्षाकुतूहलाकृष्टहृदयो मुद्रणालयं गत्वा दृष्ट्वा च
व्याख्यानकौशलं तुष्टमना अभूवम्, अथ मुद्रापयितुरुपकारो गुणाश्च सद्यस्स्मृतिपथम-
गच्छन्, ततश्च लब्धावसरः स्वयमेव "रघुकुलतिलकमेकं कलयतां कवीनां को दोषः स
तु गुणगणानामवगुणः" "मौनद्रुहो मुखरयन्ति गुणास्त्वदीयाः" इत्युक्तप्रकारेण तद्गु-
णैर्हठादाकृष्टहृदयो वाचालतां नीतोऽस्म्यतोऽज्ञातप्राथमिकविषयोऽपीतस्ततोऽवगत्य कि-
ञ्चिद्ब्रवीमि ॥

अस्ति किल सुप्रसिद्धजयपुरनगरादुत्तरस्यां दिशि प्रायेण दशयोजनदूरवर्ति वालु-
काभूयिष्ठेपि विविधसम्पत्परिपूर्णतमेऽतिधनाढ्यजनसमाकुले शेखावाटीति प्रसिद्धिमुपगते
जनमनोहारिणि जनपदे तद्देशालंकारभूतं 'लक्ष्मणगढ' इति समाह्वयं नगरम् । "य-
स्मिञ्श्रीपूर्णमल्लो धनिकुलतिलको वैश्यवंशेऽवतीर्य श्रीकाञ्चीवादिभीकृद्गुरुकुलतिलका-
नन्तसूरेः पदाब्जम् ॥ संश्रित्यानन्दपूर्णः समजनि सुमहद्दिव्यदेशं विधाय कैंकर्यं पुष्करादौ
हरिवरनिलये सात्वतीयं च चक्रे" तस्मिन् नगरवरे वैश्यवंशोद्भव " सवाईराम " इति
शुभनामधेयात्पितुश्चन्द्राम्बरनन्देन्दुमिते( १९०१ ) वैक्रमाब्दे लब्धजनिरयं कतिचिद्वर्षा-
स्तत्र नीत्वा पितरि परलोकं प्रस्थिते श्रीरामनारायणाह्वयेन स्वपितृव्येन सभ्रातृको
गुर्जरदेशालङ्कारभूतम् ' अमदाबाद' पत्तनं व्यापारार्थं समायातः । तत्र च स्वकुलो-
चितव्यापारपरायणो न्यवसत्, अथैकदाऽयं सभ्रातृकः स्वपितृव्येण रामनारायणेन
सह मोहमयीपत्तनं गतः तत्र चाज्ञातसुकृतपरिपाकेन सर्वेऽपि श्रीवरवरमुनिपादुका-
रत्नभूतश्रीवरदनारायणगुरुपरम्परान्तर्गतानां 'मुम्बई' पत्तनगतश्रीनारायणवाटि-
कास्थकंदाडै श्रीरामाचार्यस्वामिनां श्रीचरणकमलसमाश्रयणं प्राप्ताः "आचार्यो वेद-
सम्पन्नो विष्णुभक्तो विमत्सरः" इत्यादिसदाचार्यलक्षणोपेतैः श्रीरामाचार्यस्वामिभि

रपि श्रीमहालक्ष्मीपुरुषकारपूर्वकं परमवात्सल्येन परमकरुणया " नारायण दयासिन्धो वात्सल्यगुणसागर ! । एनं रक्ष जगन्नाथ बहुजन्मापराधिनम्" इत्यादिप्रार्थनापूर्वकं भगवतोऽखिलेश्वरस्य श्रीमन्नारायणस्य शरणवरणतां नीत्वा कृतार्थीकृत प्रायेणायं परमोपकारो महाभागवतस्य श्रीरामनारायणस्यैवेति तत इदानीमपि सर्वे कृतज्ञतया-तस्य महानुभावस्य महोपकारं सर्वदा स्मरन्ति ततश्च सर्वे श्रीरामानुजसम्प्रदायानुया-यिनः पारलौकिकोपदेशवृष्टिस्थिरीभावयोग्यनिम्नहृदयभूमयो जाताः । तत्र देवराज-रामानुजदासस्य कनिष्ठो भ्राता रामप्रपन्नरामानुजदासः रामनारायणरामानुजदासस्य पुत्रो मधुसूदनरामानुजदास इतीमे चत्वारः सुखेनाऽमदावादनगरे न्यवसन् । किञ्चित्का-लानन्तरं श्रीसम्प्रदायश्रीरूपां परमां वैष्णवीं श्रियं त्रिभ्योऽपि पुत्रेभ्यस्तुल्यां विभज्य रामनारायणरामानुजदासे परमंपदं प्रस्थिते सति देवराजरामानुजदासप्रभृतय इमे त्रयोऽपि भ्रातरः परमसौहार्देन लौकिक्यां सम्पदि प्रारब्धमात्रमवेक्षमाणाः पारलौ-किक्यां वैष्णव्यां कैङ्कर्यरूपायां सम्पदि वृद्धिप्रयत्नपरायणाः क्रमेण वैष्णवीं सम्पद-मेव वर्द्धयाञ्चक्रिरे । तत्र रसरामनन्देन्दुमितात् ( १९३६ ) वैक्रमाब्दादारभ्य पञ्चवर्षपर्यन्तं श्रीरामचरणस्वामि—मंगलिस्वामि—प्रभृतिपरमभागवतजनसहवासेनाहोरात्रं पञ्चरहस्यादिस्वरूपशोधकसद्ग्रन्थकालक्षेपश्रवणमननादिना त्रयाणामपि हृदयालवाल-समुद्भूतो वैष्णवतारूपवृक्षाङ्कुरः समुल्लसितपल्लवो जातः, ततस्तस्मिन्नेवामदाबादपत्तने श्रीवैकुण्ठरामानुजदासप्रभृतिवैष्णवेभ्यः षोडशाब्दपर्यन्तम् आजन्मन षोडशाब्दात्स्त न्याञ्जनभिलाषिणः श्रीशानुभवपुष्टस्य श्रीशठकोपसूरेः कृतिरूपरसामृतस्य पानेन स एव वैष्णवतावृक्षः श्रीशानुभवरसाऽमृतपुष्टः स्कन्धशाखाप्रशाखादिसम्पन्नस्सन् पुष्पितो-ऽप्यभवत्, एवं रैवताऽचलप्रान्तगतखरारिपुरमठस्थश्रीरघुनाथस्वामिकृपयाऽप्येषां परमो लाभ आसीत्, एवमेव तत्तत्समये तेषान्तेषामनेकेषां महात्मनां परमानुग्रहपात्राण्येतेऽ-भवन्, परञ्च यत्समयमारभ्यैतेषां गृहे वैष्णवताऽवततार तदाप्रभृत्येव श्रीवैष्णवसे-वाया अपि क्रमशो वृद्धिः समजनि सौभ्रात्रञ्चैतेषामुत्तरोत्तरं वाचामगोचरं समेधितम्, तदनन्तरं नाऽपि चैतेषां रसना कदापि वैष्णवदोषान् स्पृशति नाप्यन्यैर्वैष्णवदोषो-द्घाटनेपि कदाचिदेते वाचाप्यनुमन्यन्से प्राप्तेऽपि कथनप्रसंग एवं किल ते कथयन्ति



यत्स्वकीयपापदृष्टिदोषेणैव निर्मलनिर्दोषेषु वैष्णवेष्वसन्तो दोषा भासन्ते यथाऽसदेव स्वभावधवले शंखे काचकामलादिदोषेण पतित्वमिति इत्येवमादिकान् तेषां वास्तवगुणान् यदा द्वारकादितीर्थपर्यटनपरा दक्षिणयात्रागमनागमनविधायिनो भागवता जनाः परस्पर-मेकेऽन्येभ्यश्च तत्र तत्र कथयाम्बभूवुः तदारभ्यैते परमां प्रसिद्धिं गमिताः । ततश्च तदाप्रभृत्येवैतेषां गृहमपि श्रीवैष्णवानामावासस्थानमासीत्, तत एव च ये केचनोत्तर-देशयात्राटनाय निर्गतास्ते प्रायेण सर्वेऽपि स्वयमाचार्याश्चतुःसप्ततिपीठस्थेष्वन्यतमा अष्टदिग्गजवंशीया वा अन्ये केचनोत्तमवंशजाचार्यपुरुषा देवराजरामानुजदासस्य निवासस्थलं स्वचरणसरोजरजोभिः पावनीकृत्यैव गताः, तदनन्तरं क्रमेण सर्वेष्यनेक-वारं श्रीदक्षिणदिव्यदेशयात्रायां भगवतः पुरुषोत्तमस्य श्रीमन्नारायणस्य वैभवज्ञापका-नुत्सवान्संसेव्यात्मानं कृतार्थं चक्रुः । एवं दक्षिणयात्रापि तैः सकुटुम्बैरसकृदावृत्ता तथा श्रीबदरिकाश्रमद्वारकामथुरामायाऽयोध्यावृन्दावनगोकुलश्रीपुष्करपुरुषोत्तमक्षेत्राद्यु-त्तरदेशतीर्थयात्रापि बहुवारं सुविहिता, श्रीवृन्दावनादिदिव्यदेशेष्वेतेषां भागवतसेवापि सततमविच्छिन्ना यथोचितं प्रचलति । किञ्च लोकेऽन्येषां कुलपरम्परागतवैष्णव-ताशालिनां सप्तपूर्वपुरुषतो वैष्णवतावतामपि नैतादृशी वैष्णवतासम्पत्तिर्यादृशी किलैतेषां वरीवर्त्तीत्यपि नाश्चर्यकरम् " जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः सवै मोक्षार्थचिन्तकः" इत्युक्तप्रकारेण तेषामुत्पत्तिकालीनभग-वत्कटाक्षविशेषविषयत्वात्, अपि चैतेषां पुरुषार्थचतुष्टयमपि साधनसम्पदमन्तरेणापि हस्तामलकतांगतमिवाभाति यथोक्तं महाभारते "या या साधनसंपत्तिः पुरुषार्थचतु-ष्टये । तया विना तदाप्नोति नरो नारायणाश्रयः" इति । अथ क्रमेणैतेषां भगव-द्विषयपरिचयमारभ्य भगवद्विषयरसामृतसिन्धुमीनायमानानां सतां भगवद्भक्तिपराका-ष्ठाभूता मुक्तिपथसंशयविध्वंसिनी भागवतभक्तिरुत्कूलप्रवाहा समवर्द्धत । अतस्तेषु "मुक्तिर्भवति वा नेति संशयोऽच्युतसेविनाम् । न संशयोऽस्ति तद्भक्तपरिचर्यारतात्म-नाम्" इति शाण्डिल्योक्तं सार्थकमिवाऽदृश्यत तदनन्तरमेते स्मरणीयाहोरात्रचर्यास्सम-जनिषत ।

परमेतेषु त्रिष्वपि भ्रातृषु कन्दाडै श्रीरामाचार्यस्वामिकृपया भगवन्तं प्रपन्नेषु समानगुणशीलेष्वपि देवराजरामानुजदासस्य प्रपत्त्यैवार्त्तितांगीकृता तत आरभ्य तत्पर-

वशतां गत आर्त्तप्रपन्नलक्षणोपेतः श्रीरामानुजचरणावेव शरणमिति केवलवाग्व्यापारमन्तरा मनसापि तथा निश्चित्य खेष्वङ्केन्दु ( १९५० ) मिताद्वैक्रमाब्दात्समारम्यादिशेषावतारभूतस्य विभूतिद्वयाधीश्वरस्य श्री६ मद्भगवतद्रामानुजाचार्यस्यावतारस्थले श्रीमन्महाभूतपुरे स्वानिवासं संरोचयामास स्वपत्नीपरलोकगमनानन्तरन्तु सर्वतो मनोवृत्तिनिवारिणीं स्वपदकमलमनोनुरागविस्तारिणीं पारक्याकार्यानुकूल्यसम्पादिनीं परमां भगवत्कृपामेवात्मानं प्लावयन्तीं मेने । ततश्च "अथो विहायेमममुञ्च लोकं विमार्शितो हेयतया पुरस्तात् ॥ कृष्णाङ्घ्रिसेवामधिमन्यमान उपाविशत्प्रायममर्त्यनद्याम्" इत्युक्तप्रकारेण परमभागवतपरीक्षिदिव लोकप्रवादं लौकिकजनसहवासञ्च सहैव मुक्त्व काञ्चीपुरात्पूर्वदिशि योजनत्रयदूरवर्त्तिनि श्रीमन्महाभूतपुरे स्वनिवासं विनिश्चित्य तत्रापि "स्वामी निहन्तु विहसन्तु पुरः सपत्न्यो भर्त्तुर्भजन्तु पितरो गुरवश्च लज्जाम् ॥ एतावता यदि कलंकि कुलं तदस्तु रामानुजे सखि ! तनोतु मनोऽनुरागम्" इत्युक्तवत्याः कस्याश्चित्कृष्णानुरागरक्तायाः गोकुलयुवत्या इवानुष्ठानं विदधल्लोकव्यवहारं सलज्जं परिभूय चरमपर्वनिष्ठतया श्रीरामावरजमुनीन्द्राभिमानविषयीभवञ्श्रीरामानुजावतारसनाथीकृतं प्रथमप्रादुर्भूतकेशवं श्रीभूतपुरमध्युवास । तत्रापि भगवद्भागवताचार्यसेवापरायणस्सन्निवासस्थलं कल्पयित्वा कतिपयैर्वैष्णवजनैस्तत्र निवसन्नागन्तुकान्वैष्णवजनान्सत्कर्त्तुकामः श्रीकेशवस्य भगवतो मन्दिरे प्रतिदिवसं भगवन्निवेदनपूर्वकं विंशतिसङ्ख्याकवैष्णवानां तदीयाराधनं सुस्थिरं विदधे । तच्चेदानीं सुखेन प्रचलति। अन्येपि च देशदेशान्तरस्था धार्मिका जनास्तस्मिन्परमया श्रद्धया महाविश्वासेन च श्रीरंगादिदिव्यदेशसेवाकैंकर्यार्थमर्थं प्रेषयन्ति तदपि द्रव्यं यथार्हं विनियुक्ते. एवं तदीयां पारलौकिकीं सम्पदं दृष्ट्वाद्य किञ्चित्किञ्चित्कतिकति न मनुजास्तमनुसरन्ति किम्बहुक्तेन श्रीवेंकटेशमहामुद्रालयाध्यक्षः श्रीकृष्णदासात्मजः खेमराजोपि तमनुचिकीर्षुः श्रीमत्यां भूतपुर्यां स्वमनोविश्रान्तिं विदधत्स्वानिवासार्थं तत्र सदनं क्रीणातिस्म यस्मिन्कति कति महानुभावाः श्रीवैष्णवा यात्रोत्सवादिप्रसंगसमागता विश्रामं लभन्ते । अथ यदि भगवतः पूर्णानुग्रहोऽभविष्यत्तदा खेमराजोपि देवराजमन्वसारिष्यत्, एवन्तमनुसर्त्तुं बहव उत्सहंते किन्तु भगवतो लक्ष्मीनायकस्य श्रीकेशवस्य जगद्गुरोर्यतिराजस्य च मुमुक्षुजनानन्दिनित्यनैमित्तिकैर्महोत्सवैरतिरमणीये तस्मिन्पुरे सततनिवासिभिरागन्तुकैश्च वकु-



लधरयतीश्वरादिसरस्वतीसुरभिताशयैर्महाभागवतैरनिशनिवासेन तद्वदनारविन्दनिर्गतभगवच्चारित्रपीयूषपानेन च तद्धृदयं रमाकान्तमन्दिरमेव संवृतमतोऽवाप्तसमस्तकामोपि निखिलब्रह्माण्डनायकोपि सर्वान्तर्यामी सन्नपि देवराजरामानुजदासहृदयकमलमेव विशिष्टतया स्वनिवासं चकमे, सम्प्रति च तस्य चर्यापि कथमिव वर्णयितुं शक्यते । यः श्रीभूतपुरीमास्थितोऽपि तत्रत्यस्वामिलोकश्रीवदनारविन्दगलितं तिरस्कृतसुधावैभवं नित्यं भगवद्विषयं दिव्यचारितं कर्णरन्ध्राभ्यां निपीय तदतृप्तामृतमाधुर्यातिशयमनुभूय "एकः स्वादु न भुञ्जीत" इति न्यायमनुसृत्य स्वभ्रातृवर्गमपि "श्रीभगवद्विषयस्यामुकशतकान्तर्गताऽमुकदशकीयामुकगाथाया अमुकस्वामिभिरेवं विशेषार्थः प्रत्यपादि" इत्यादि पत्रद्वाराज्ञापनेन कृतार्थयति श्रीभूतपुरादागतं तदीयं पत्रमपि तद्भ्रातृवर्गस्य कालक्षेपकौतुकं विदधद्वेदवाक्यमिव माननीयम्भवति । स च स्वासाधारणवैष्णवोचितसौजन्येन स्वभ्रातृसन्तातिवर्गमपि कृतार्थयितुकामः काले कालेतत्तत्कर्त्तव्यशिक्षणं पत्रद्वारा परमसौहार्देन लिखति—तथाहि देवराजरामानुजदासस्य यः कनिष्ठो भ्राता रामप्रपन्नरामानुजदासो वर्त्तते, तत्पुत्रो घनश्यामरामानुजदासः समुचितगुणसम्पन्नः पितृभक्तः सुशीलो वैष्णवसेवी लोकद्वयसाधनचतुरो जात इति देवराजरामानुजदासस्य महान् सन्तोषोऽस्ति घनश्यामरामानुजदासस्यापि सम्प्रति त्रयः पुत्राः सन्ति रामानुजदासो नारायणदासो रघुनाथदासश्चेति, तत्र ज्येष्ठो रामानुजदासः प्रायेण दशवर्षीयो जातः तच्छिक्षणार्थं देवराजरामानुजदासः श्रीभूतपुरादेवं लिखति "सम्प्रति चिरायू रामानुजदासो दशवर्षो जातः इतः परं तस्य मृत्तिकया हस्तपादादिशौचाविधिर्यथाशास्त्रं शिक्षणीयः । यदि गुरुपरम्परापुस्तकं सम्यगवगतं स्यात्तर्हि दिनचर्या पाठनीया" इति । एवमात्मलाभात्परं किञ्चिदन्यन्नास्तीति निश्चित्य सर्वेषां स्वसम्बन्धिनां स्वस्मिञ्श्र द्धावतां स्वाज्ञाकारिणां भगवदौन्मुख्यार्थं प्रयतते न तु प्राकृतसम्बन्धेन कुत्रापि तस्य रागोस्ति, यथैतेषु ततोऽधिकं हरिप्रियेषु ततोऽप्यधिकं भागवतप्रियेष्वनुरागं विधत्ते किं बहुना स्वशरीरमपि भोटकाश्वमिव गणयति नित्यं ब्राह्ममुहूर्त्तादपि पूर्वं समुत्थाय सपरिकरं श्रीमन्नारायणं ध्यात्वा श्रीवकुलधरमुनीन्द्रप्रसादितसहस्रगीतीतिप्रसिद्धदिव्यप्रबन्धस्य श्रीगोवर्द्धनरंगदेशिकप्रसादितसंस्कृतानुवादमुच्चैःपठन् प्रथममानन्दसुधाप्रवाहैरात्मानं

१ भाडेका टट्टू ।

प्लावयति । ततः सूर्योदयादर्वागेव बाह्यकृत्यतो निवृत्तः श्रीमदनन्तसरसि स्नात्वा द्वादशोर्ध्वपुण्ड्रयुगलमालादिकं धृत्वाऽऽवश्यकमनुष्ठाय परमभागवतैस्सह श्रीमन्महामन्दिरं प्रविश्य नित्यं भगवद्भागवताचार्यकृपापात्रं भवति । अहमपीतः परमिदमेव परमकारुणिकं श्रीमन्नारायणमाशासे यादृशी वैष्णवी सम्पदस्मै ..क्षवे दत्ता हे पुरुषोत्तम दयानिधे ! कदा वा मह्यमपराधपूर्णाय दीनाय दास्यसे तादृशीमिति । मुमुक्षुभिरियमेव च प्रार्थनीया यतोऽस्मिन्कलौ विरलाः खल्वेतादृशा इति मनुते श्रीबलरामस्वामिचरणाश्रितो वृन्दावननिवासी भागवतदासः ॥

श्रियै नमः ।



श्रीमते रामानुजाय नमः ।

## वरवरमुनिशतकस्थश्लोकानामकारादिक्रमानुक्रमणिका ।

इति श्रीवरवरमुनिशतकस्थश्लोकक्रमानुक्रमणिका समाप्ता ।



॥ श्रीः ॥



# श्रीवरवरमुनिशतकं–

## सव्याख्यानम् ।



श्रीमते रामानुजाय नमः । श्रीलोकगुरवे नमः ॥

श्रीवरवरमुनये नमः ।

व्या०–महीसारपुराधीशो महनीयगुणार्णवः ।
भक्तिसारो विजयते भुक्तिमुक्तिप्रदो नृणाम् ॥ १ ॥
श्रीदेवराजगुरुवरविरचितमिदं व्याकरोति सत्प्रीत्यै ।
वरवरमुनिवरशतकं वाधूलो वीरराघवो दासः ॥ २ ॥

अ०–इह खलु चरमपर्वनिष्ठानामग्रणीर्देवराजगुरुः "गुरुरेव परं ब्रह्म" उपायोपेयभावेन तमेव शरणं व्रजेत्" "साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम्। मग्नानुद्धरते लोकान्कारुण्याच्छास्त्रपाणिना॥" इत्यादिप्रमाणैराचार्यरूपस्य भगवतः परतन्त्रशेषित्वविलक्षणजीवाधिष्ठितत्वाभ्यामव्यभिचरितोपायत्वं खण्डशर्कराक्षीरवत् मिलितानुभाव्यत्वरूपपरमोपेयत्वञ्च निर्णीय तादृशाचार्यत्वपूर्तेः "विष्णुः शेषी

तदीयश्शुभगुणनिलयो विग्रहः श्रीशठारिः" इत्याद्युक्तप्रकारेण भगवति रामानुजाचार्ये सम्प्रतिपन्नत्वेन तमेव चरमोपायोपेयमभिसन्धाय तन्निष्ठापूर्णत्वेन तत्तादात्म्येन वा भगवतः सौम्यजामातृमुनेस्तु शेषित्वशरण्यत्वप्राप्यत्वरूपाऽऽकारत्रयमनुसन्धाय तादृशानुसन्धानजनिततद्विषयकपरमभक्तिप्रेरितो मादृशजनानर्थपरिजिहीर्षया च वरवरमुनिशतकमेतत्प्रणेतुकामो मङ्गलमाचरति—

श्रीदेवराजगुरुवर्यविषयोऽयं श्लोकः।

सौम्यजामातृयोगीन्द्रचरणाम्बुजषट्पदम्।
देवराजगुरुं वन्दे दिव्यज्ञानप्रदं शुभम्॥



मूलम्—वरवरमुनिवर्यपादुरत्नं वरदगुरुं गुरुमाश्रये गुरूणाम्॥
उपनिषदुपगीतमर्थतत्त्वं तदिह यदीयवशम्वदं समिन्धे॥१॥

व्या०—वरवरेति ॥ 'वृङ् सम्भक्तौ' व्रियते प्रार्थ्यत इति वरो रम्यः वरो जामाता वरश्चाऽसौ वरश्च इति कर्मधारयः। रम्यजामातेत्यर्थः। मुनयः मननशीलाः, मननञ्चेह विषयस्वाभाव्यात् चरमस्वरूपोपायोपेयविषयकं ज्ञेयम्। तेषां वर्यः श्रेष्ठः वरवरश्चाऽसौ मुनिवर्यश्चेति विग्रहः। तस्य पादुरत्नं[1] पादुकाश्रेष्ठम् अयमेव चास्य वरदनारायणगुरो स्वरूपप्राप्तत्वात् आद्यो व्यपदेश इति सूचनायाऽस्य विशेषणस्य प्रथमं निवेशः। स्वनिकटंप्राति वरवरमुनिसन्निधापनरूपमहोपकारकर्तृस्वाचार्यनिष्ठतत्पादुकात्वविषयककृतज्ञतया वा

१ पादुरत्नम् अत्र पादु इति " इकोह्रस्वोऽङ्यो गालवस्य" इति ह्रस्वेन साधु अत एव पादूयुग्ममिति।



पूर्वं तदुक्तिः। रत्नम् इति पदेनाऽस्य वरवरमुनेः भगवद्रामानुजत्वे दिव्यपादुकाभूतदाशरथित्वं व्यावर्त्यते। तत्पादुकापेक्षया, तदीयपादुकाया अभ्यर्हितत्वात्। गुरूणां[1] सकलजगद्धितोपदेष्टॄणां गुरुम् हिततमोपदेष्टारम्। "गृणातेः कुप्रोरुच" इत्युप्रत्ययः। वरदगुरुम् वरदनारायणगुरुम्। अत्रत्यगुरुशब्दः स्वापेक्षया गुरुत्वाऽभिप्रायकः। आश्रये सेवे, तद्विषकानुकूलवृत्तिं करोमि तत्प्रसिद्धम् उपनिषद्भिरव्यवधानेन भगवत्प्रतिपादकवेदभागैः उपगीतम् उपदिष्टम्। गीतपदेन उपनिषदश्छान्दोग्यादिका इति सूच्यते। छान्दोग्यसमत्वेन प्रसिद्धसहस्रगाथोपनिषदिति च गीतोपनिषदिति च सूच्यते। अर्थस्याभिधेयस्य तत्त्वं याथात्म्यं तात्पर्यम्। अर्थस्य प्रयोजनस्य तत्त्वं याथात्म्यं चरमपर्वात्मकं वा इह अन्यथाऽज्ञानादिपूर्णे संसारमण्डले यदीयवशंवदं सत् यदीयानां यादृशवरदनारायणाभिमानविषयाणां वशंवदं सत् तदधीनं सत् "प्रियवशे वद खच्"। समिन्धे सम्यक्प्रकाशते। उपसर्गवर्तमाननिर्देशाभ्यां दीप्तेरयतनाऽस्मदादिपर्यन्तातिविषयत्वापादकाविच्छेदाविचाल्यत्वापादकस्फोरत्वे उच्येते। तत्त्वपदंचाभिधानवृत्या उपनिषदामर्थान्तरमपि गमयति। तच्च प्रथमपर्वादिकम्। यदीयवशम्वदं समिन्धे तं वरदगुरुमाश्रये इत्यन्वयः॥ १॥

अवतारिका—इत्थं स्वाचार्यं प्रणम्य भगवद्वन्दनं स्वार्यं गुरुवन्दनपूर्वकम् इति प्रापकाचार्यप्रणामपूर्वकप्राप्येष्टदेवताप्रणामस्य

१ गुरूणाम्, सकलजगद्धितोपदेष्टॄणां वरवरमुनिवर्याणाम् पूजायां बहुवचनम्, गुरुम् आचार्यवर्यम्, मद्गुरुं संश्रय इति वरवरमुनिवर्येण स्वेनैवोक्तेः अयमर्थस्सम्प्रदायतोऽवगन्तव्यः।

स्वादुतातिशयावगमेन पादुरत्नम् इति प्रापकप्रणामानन्तरं प्राप्यं प्रणमति-

मू०-गुणमणिनिधये नमो नमस्ते ।
गुरुकुलधुर्य नमो नमो नमस्ते ॥
वरवरमुनये नमो नमस्ते ।
यतिवरतत्त्वविदे नमो नमस्ते ॥ २ ॥

व्या०-गुणमणिनिधय इति॥ अयंच मूलमन्त्रार्थच्छायानुकारि श्लोकः । तथा हि, वाक्यैकत्वद्वित्वत्रित्वभेदैरनेकधा भिन्नानां मूलमन्त्रयोजनानां मध्ये सारभूतं स्वरूपस्वरूपानुरूपपुरुषार्थपरत्व स्वरूपोपायफलपरत्वात्मकयोजनाद्वयं चरमविषयेऽप्यवशिष्टम् । एवंचाऽस्य श्लोकस्य पूर्वार्द्धे प्रथमपादे नमः शब्दस्य द्विरावृत्तिः प्रथमयोजनायां स्वरूपपुरुषार्थरूपस्थानद्वयान्वयतात्पर्येण द्वितीयपादे तस्य त्रिः प्रयोगो द्वितीययोजनायां स्वरूपोपायफलात्मकस्थानत्रयान्वयतात्पर्येण। अत्र च नम इति निषेध्यमहम्मदीयश्चेति प्रसंजनमप्यनिष्टमिति व्यञ्जयितुं तयोरनुक्तिः । प्रकरणादेव तयोरवगतिरित्याशयः। तत्र स्वारसिकप्रेमास्पदगुणविशेषवैशिट्यतदुपपादिताचार्यत्व पूर्तिवैशिष्ट्यतदुभयाश्रयदिव्यमंगलविग्रहदिव्यात्मस्वरूपाणामुद्देश्यतासूचनाय पादत्रयात्मकवाक्यत्रयेण तेषां क्रमेण निर्देशः । सर्वेषामप्यमीषामुद्देश्यतायां मूलकन्दश्च यतिवरतत्त्वविद इति तुरीयपादेनोक्तम् । अत्र भगवन् इति सम्बुद्धिरपेक्ष्यते त इत्युक्तेः । अहमिति च नम इति च निषेधसामर्थ्यात्। ततश्च हे भगवन् अहम्, गुणमणिनिधये



ते मो न गुणाः परमकारुणिकत्वे निरवधिक वात्सल्यजलधित्व प्रभृतयः, त एव मणयः अनन्योपमर्घत्वतेजिष्टत्वरञ्जकत्वैस्सादृश्याद्रूपणं तेषां निधये अक्षयाऽऽधाराय।यथा लोके आभरणस्था मणयो निधिसम्बन्धिनो निधेरेव संग्रहीताः, तथा इतोऽन्यत्राऽऽचार्येषु दृश्यमानाः कारुणिकत्वादय एतत्संम्बन्धिन एतस्मादेव संग्रहीता इति सूच्यते । अत्र मम पुरुषार्थ इत्यध्याह्रीयते। हे भगवन् मम पुरुषार्थस्त्वत्किंकरवृत्तिरूपस्ते मः न। मम इति प्रथमपादे नमश्शब्दयोरर्थः । गुणविशेषवैशिष्ट्यमुक्त्वा तदुपपादिताचार्यत्वपूर्तिमाह, गुरुकुल इति । धुरं वहतीति धुर्यः अनेन तद्भरवोढृत्वमुच्यते । अत्राहं मदुपायः मम फलं चेत्यपेक्ष्यन्ते।तत्र क्रमेण अहं ते मः न मदुपायस्तेमः न मम फलं ते मः न इति नमश्शब्दानामर्थः।एवं पादद्वयेन योजनाद्वयं स्फोरितम् । पूर्वोक्तद्वयाश्रयदिव्यमंगलविग्रहदिव्यात्मस्वरूपे आह, वरवरमुनय इति । शरीरविशिष्टात्मवाचित्वात् अस्य शब्दस्योभयलाभः । अत्र स्वरूपपुरुषार्थपरत्वरूपप्रथमयोजनाया अभ्यर्हितत्वेन तद्द्योतनाय पुनर्वाक्यान्तरे तत्सूचकनमश्शब्दद्विरावृत्तिः । सर्वेषामप्यमीषां गुणादीनामुद्देश्यतायां मूलकन्दमाह,यतिवरेति । यतिवरस्य रामानुजाचार्यस्य तत्त्वम् उपायोपेयत्वे ते वेत्ति जानातीति यतिवरतत्त्ववित् ।"उपायोपेयत्वे तदिह तव तत्त्वम्" इति तयोस्तत्त्वत्वेन कथनात् । यद्वा यतिवरतत्त्वं यतिवरतादात्म्यं विन्दति लभत इति यतिवरतत्त्ववित्, श्रीरामानुजाचार्यतादात्म्यवानित्यर्थः। अयंचार्थः सम्प्रदायतोऽवगन्तव्यः। तथा विधायाहं मः नेत्यादि अत्रादराति-

शयात् नमश्शब्दावृत्तिः इत्यप्याहुः। "नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तुते सर्वत एव सर्व" इत्युक्तरीत्या प्राच्यादिष्वष्टासु दिक्षूर्ध्वञ्च प्रणामाभिप्रायकं नमःशब्दावृत्तिनवकमिति वा ज्ञेयम्। अत्र च गुरुकुलधुर्य इत्यत्र नमश्शब्दावृत्तित्रयमाचार्यकैंकर्यस्य त्रिवृत्त्वसूचनाय। आचार्यस्य हि भगवद्भागवताचार्यात्मकत्वेन तद्विषयकैंकर्यस्याऽपि त्रिगुणत्वात्। तत्र तिसृष्वपि विधासु स्वार्थतागन्धराहित्यद्योतनं गुरुकुलधुर्यं नमोनमोनमस्ते इति नमश्शब्दैस्त्रिभिर्भवति ॥ २ ॥

अ०—मुख्यान्मुख्यतमवरवरमुनिचरणसरसिजलक्षणप्राप्यप्रापकलाभः स्वकुलदेवताभूतरघुकुलतिलकनिरवधिककरुणामूलक इति तमुत्तरश्लोके प्रणमस्यन् तत्कृपारूपां जनकराजतनयां प्रणमति—

मू०—कुरु मयि विमलं दृगञ्चलं ते कुशलनिदानदया-
निधे नमस्ते॥ निशिचरपरिपन्थिनित्ययुक्ते नि-
मिकुलमङ्गलदीपिके नमस्ते ॥ ३ ॥

व्या०-कुरुमयीति॥ कुशलनिदान इतिसम्बुध्यन्तं सीतापरं नित्यनपुंसकम्। एकपदत्वेन दयाविशेषणं वा। कुशलस्य चरमपर्वाधिकाररूपपरमनिःश्रेयसस्य निदान मूलकारणभूते। मूलकारणञ्च कारणकारणम्। उक्तकुशलकारणं भगवत्कृपा, सा चैतदधीनेति भावः। "देव्या कारुण्यरूपया" इति ह्युक्तम्। कारुण्यं रूपयति प्रकाशयतीति तदर्थः। तदाह दयानिधे इति। भगवतः परमकारुणिकत्वमप्येतदधीनमिति भावः। "षाड्गुण्यविग्रहाम्" इति ह्युक्तम्। भगवदीयज्ञानशक्त्यादिअभिमानित्वं तदर्थः। विमलम्, रजस्तमोपहं



ते दृगञ्चलं दृशोरञ्चलमपाङ्गम्। मयि चरमपर्वाधिकारात्मकसाम्राज्यसिंहासनमधिरूढे मयि। कुरु तद्भ्रंशाऽभावाय कुर्वित्यर्थः। "विज्ञानं यदिदं प्राप्तं यदिदं स्थानमार्जितम्। जन्मान्तरेऽपि मे देव माभूत्तस्य परिक्षयः" इतिवत्। ते नमः त्वां प्रणमामीत्यर्थः। निशिचरपरिपन्थिना राक्षसशत्रुणा पौलस्त्यकुलधूमकेतुना नित्ययुक्ते नित्ययोगवति। परिपन्थिशब्दो लोके न न्याय्य इति वैय्याकरणाः कवयस्तु बहुलं प्रयुञ्जते "पन्थानं परिपन्थिनाम्" "दनुजपरिपन्थी" इत्यादि। निमिकुलमंगलदीपिके जनककुलम्प्रति श्रेयस्करत्वप्रकाशकत्वाभ्यां मंगलदीपिकात्वरूपणम्। उक्तञ्च "जनकानां कुले कीर्तिमाहरिष्यति मे सुता" इति। निशिचरपरिपन्थिनित्ययुक्ते निमिकुलमंगलदीपिके इत्युक्तेः। निमिकुलमंगलदीपिकायां निशिचरपरिपन्थिनित्ययोगस्स्नेह इवेति व्यज्यते। उपकारस्मृत्यनुवर्तनात् पुनर्नमस्यति नमस्त इति ॥ ३ ॥

अ०—उक्तरीत्या भगवन्तं प्रणमति—

मू०—रविसुतसुहृदे नमोनमस्तेरघुकुलरत्न नमो
नमो नमस्ते॥ दशमुखमकुटच्छिदे नमस्ते
दशरथनन्दन सन्ततं नमस्ते ॥ ४ ॥

व्या०—रविसुतस्येति ॥ रविसुतस्य सुग्रीवस्य सुहृदे शुभाशंसिहृदयाय। अनेन चेतनस्य स्वहितचिन्तायाः पूर्वमेव भगवतस्तच्चिन्तकत्वमुच्यते। रघुकुलरत्न रघुवंशालंकारभूत अत्र तुल्यत्वात् रविकुलरत्न इति वक्तव्ये प्रत्युत प्रासवशात् तथैव वा वक्तव्ये रघुकुल-

इत्युक्तेश्शरण्यतायां महाव्रतत्वं स्फोर्यते । दशमुखमकुटच्छिदे अनेन प्रार्थयितॄणामप्रार्थयितॄणाश्चाऽनिष्टनिवर्तकत्वमुच्यते । दशरथनन्दन अनेनानन्यप्रयोजनानां स्वरूपेण भोगहेतुत्वमुच्यते । आह च दशरथः । "अहं पुनर्देवकुमाररूपं स्वलंकृतं तं सुतमाव्रजन्तम् । नन्दामि पश्यन्नपि दर्शनेन भवामि दृष्ट्वा च पुनर्युवेव॥"इति । अत्र यथा सुग्रीवस्य स्वयमेव तमभिगम्य हितं कृतवान्, तथा स्वयमेव मह्यं वरवरमुनिचरणलक्षणहितं दत्तवानिति व्यज्यते । अत एवो-पकारस्मृत्यनुवर्तनात् प्रणामावृत्तयः ॥ ४ ॥

अ०—वरवरमुनिवरचरणनलिनलक्षणविलक्षणप्राप्यप्रापकानुस-न्धानजनिततद्विषयकपरमभक्तिप्रेरितेन मया करिष्यमाणोऽयं प्रबन्धो नुपदर्शितप्राप्यप्रापकयाथात्म्यबुभुत्सूनामादरणीयम् इत्यभिसन्धा-यावगततद्याथात्म्यानामपि निरन्तरतद्गुणानुभवौपयिक इति वदन् सति विषयवैलक्षण्ये वक्तृवैलक्षण्यमकिञ्चित्करमित्याह—

मू०—यदि पुनरभिधेयमद्वितीयं ।
कृतिभिरतः परमीक्ष्यते न किञ्चित् ॥
विजहति न हि जातु शुक्तिमुक्तं ।
विशदशशिद्युतिमौक्तिकं विदग्धाः ॥ ५ ॥

व्या०—यदीति ॥ अत्र कृतिभिरिति पदं स्त्रीलिङ्गं पुंल्लिङ्गं वा तत्राऽऽद्ये कृतिभिः प्रबन्धैरित्यर्थः । "कृतिरातनुताम्मुदम्" कृतिवि-षय आरम्भ उचितः इत्यादौ तथाप्रयोगाद्द्वितीये कृतिभिः कुशलै-रित्यर्थः । "कृती कुशल इत्यपि" इत्यमरः । कृतिभिः प्रबन्धैः



अभिधेयम्, वर्णनीयं वस्तु । अद्वितीयं यदि निस्समाभ्यधिकश्चेत् । अतःपरम् वर्णनीयाऽद्वितीयवस्तुतोऽन्यत्किञ्चित् वक्तृवैलक्षण्यादिषु अन्यतमं न ईक्ष्यते न दृश्यते । दर्शनाभावे अपेक्षाभावः कैमुत्तिक-सिद्ध इति भावः । अत्र पक्षे विदग्धैरिति शेषः। "प्रबन्धानां प्रबन्धॄ-णामपि कीर्तिप्रतिष्ठयोः । मूलं विषयभूतस्य नेतुर्गुणनिरूपणम् ॥" इत्यादिकमिह भाव्यम् । अथवा अभिधेयं वर्णनीयं वस्तु अद्वितीयं यदि अतः परं किञ्चित्, वक्तृवैलक्षण्यादिषु अन्यतमम् । कृतिभिः प्रमेयसौष्ठवपरिज्ञानवद्भिः । निरुक्तविलक्षणप्राप्यप्रापकगुणानुभव हेतुभूतभोग्यातिशययुक्तैर्वा नेक्ष्यते न दृश्यते इत्यादिपूर्ववत् । अत्र पक्षे प्रबन्धैरिति पूरणीयम् । तत्र दृष्टान्तमाह विजहति इत्यादि। वि-दग्धाः हारलावण्यविशेषाविवेचनचतुराः। शुक्तिमुक्तं स्फोटेनोद्गीर्णम् । विशदा विमला शशिन इव द्युतयः शोभा यस्य तथोक्तं मौक्तिकं न विजहति हि न त्यजन्तिहि । यथा मौक्तिकस्य शोभाविशेषापेक्षया हेयशुक्तिमुक्तत्वमकिञ्चित्करम् ।तथातद्विलक्षणविषयप्रबन्धस्याविलक्ष णकर्तृकत्वमकिञ्चित्करमिति भावः। वैधर्म्येण दृष्टान्तालङ्कारः॥५॥

अ०—ननु, अवैलक्षण्यं स्वस्योक्तं कथं तर्हि निस्समाभ्यधिकवर्ण-नीयकटाक्षसिद्धिरित्याशङ्क्य न तत्कटाक्षसिद्ध्यसिद्ध्योर्मद्वैलक्षण्या ऽवैलक्षण्ये हेतुः किन्तु विलक्षणाचार्यसम्बन्धतदभावावित्याह—

मू०—देव प्रसीद मयि दिव्यगुणैकसिन्धो
दृष्ट्या दयाऽमृतदुहा सकृदीक्षितुं माम् ॥
नैतेन कृत्यमसतेति न चिन्तयित्वा
नारायणं गुरुवरं वरदं विदन्मे ॥ ६ ॥

व्या०—देवेति ॥ हेदिव्यगुणैकसिन्धो दिवि "अथ यदतः परो दिवः" "त्रिपादस्याऽमृतं दिवि" इत्यादौ द्युशब्दवाच्यत्वेन प्रसिद्धे श्रीमति वैकुण्ठदिव्यभुवने भवाः दिव्याः "दिगादित्वात् यत्प्रत्ययः" गुणाः परमकारुणिकत्वप्रभृतयः तेषामेकसिन्धो अद्वितीयसिन्धो समस्तानां कल्याणगुणानां सत्तामात्रं परमपदे,संघातभावस्तु भगवति वरवरमुनिवर इति भावः। सिन्धुर्हि असंहत्यजातानां स्रोतोवहानां संघातभावाऽधिकरणं तद्वदित्याशयः। देव शेषिन्। "यथा देवे तथा गुरौ" "देवमिवाचार्यम्" इति देवतुल्यत्वाद्वा देवशब्दप्रयोगः। इदञ्च वरवरमुनिवरपरम्। असता अवस्तुभूतेन नन्त्रिवयुक्तन्यायेन सत्तासादृश्यं लभ्यते। तच्च लौकिकसंव्यवहारादिविषयत्वेन स्वरूपज्ञान वैधुर्ये "असन्नेव स भवति" इत्यसद्व्यपदेशात् एतेन यथाकथञ्चिद्बुद्धिस्थेन। कृत्यं कृत्यर्हम्। न इति नास्तीति 'नासाधितं करणम्' इति न्यायादिति भावः। न चिन्तयित्वा अचिन्तयित्वा। वरदं नारायणं मे गुरुवरं विदन् वरदनारायणं मद्गुरुं विदन् जानन्। दयैवामृतं सुधाभोग्यत्वसञ्जीवनत्वाभ्यां सादृश्याद्रूपणम्। तद्दुग्धे उत्पादयतीति दयाऽमृतधुक् तथा विधया दययाऽमृतं मोक्षं दुग्ध इति वा। उक्तञ्च"यस्याऽनुभावपर्यन्ता दृष्टिस्तत्त्वे प्रतिष्ठिता। तद्दृष्टिगोचरास्सर्वे मुच्यन्ते सर्वकिल्बिषैः" इति। तथाविधया दृष्टया माम् आचार्यवन्तं माम्। सकृत् एकवारम्। ईक्षितुं मयि प्रसीद प्रसादं प्राप्नुहि कालुष्यञ्जहिहीत्यर्थः। तद्धि नानाविधानन्तापचारमूलकम्। अयमाशयः सति हि विषये दृष्टिप्रसरणं भवति, कथंनाम असताऽनेन दृष्टिविषयता रूपकृत्यं भविष्यति'नासाधितंकरणम्'इति न्यायादिति नाशंकनीयम्,



वरदनारायणगुरुवराभिमानविषयत्वादेव मम वस्तुभूतत्वादिति न चिन्तयित्वेति नायं नञ्समासः नलोपादर्शनापि नशब्दस्य ल्यप्प्रसंगात्, किन्त नेति चिन्तयित्वेति पृथक्पदे तत्र नञो धात्वर्थेन सम्बन्ध इत्यूह्यम्॥ ६॥

अ०—इत्थं षड्भिः श्लोकैः प्रबन्धोपोद्घात उक्तः अथ प्रबन्धमारभते—

मू०—श्रीमद्रङ्गं जयतु परमंधाम तेजोनिधानं।
भूमा तस्मिन् भवतु कुशली कोपि भूमासहायः॥
दिव्यं तस्मै दिशतु विभवं देशिको देशिकानां।
काले काले वरवरमुनिः कल्पयन् मङ्गळानि॥ ७॥

व्या०—श्रीमद्रंगमिति॥अत्र वरवरमुनिलक्षणस्वसञ्जीवनहेतुवस्तुसत्तापालनार्थं मङ्गलाशासनप्रणाडिकां रचयति—जयतु भवतु दिशतु इति। तथा च श्रीमद्रंगस्योपप्लवाभावे तत्स्थवस्तुन उपप्लवाभावः' तस्मिंश्च सति मंगलाशासनपूर्वकतद्विभवप्रदानोपप्लवाभावः तस्मिंश्च सति वरवरमुनिवरात्मकस्वीयदैवत सत्तोपप्लवाभाव इति प्रथमं प्रथमपर्वक्रमेणोपक्रमः कृतो ग्रन्थकारैर्मंगलाशासनैकजीवना ह्येतादृशाः। एवञ्चाद्यश्लोकेन धर्मिसिद्धौ उपरितनश्लोकैर्धर्मास्साधयिष्यन्ते इति हृदयम्। श्रीमत् श्रीस्सम्पत् सा च नित्यसूरिषु मूर्धन्यस्य शेषस्य शेषिविषयकाऽशेषशेषवृत्तिकरणार्थं स्वरूपेण सौमित्रि-रामानुजाचार्य वरवरमुनिवररूपस्वावतारभेदैश्च कालत्रयेऽपि सन्निधानरूपा साऽस्यास्तीति श्रीमत् प्रशंसायां मतुप्। प्रशस्ताच श्रीरुक्ता। अनेन वामनभ-

रतकृष्णरूपावतारत्रयमात्रेण तन्मात्रसन्निधानरूपश्रीयुक्ता मथुरा व्यावर्त्यते। तेजोनिधानम्, तेजसां निधिः "अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः" इत्युक्तेः । तेजसः पराभिभवनसामर्थ्यस्य वा निधानं परमंधाम लीलाविभूतौ प्रकृष्टं स्थानम् । परमंधाम "प्रत्यक्षं परमम्पदम्"इतिवद्वा । रंगम् "क्षीराब्धेर्मण्डलाद्भानोर्योगिनां हृदयादपि । यस्माद्रङ्गिगतो देवस्तेनेदं रंगमुच्यते" इत्युक्तरीत्या भगवतः प्रकृष्टप्रमोदस्थानं रंगधाम जयतु अनुपप्लवेन वर्तताम् । आशिषि लोट् । बाहुलको रञ्जधातोऽधिकरणे घञ् । भूमयोर्भूमिलक्ष्म्योस्सहायः पतिः भूमाभ्यां भूलक्ष्मीभ्यां सह आयते आगच्छतीति वा भूमासहायः । "अयपयगतौ" इति अयधातोः पचाद्यच्प्रत्ययः । अथवा भूमे सहायभूते यस्य स तथोक्तः सहायो हि प्रधानकर्तृचिकीर्षित क्रियायामप्रधानकर्ता। एवञ्च जगद्रक्षणक्रियायां प्रधानकर्तृत्वम् "येन त्वं बत संरब्धः प्राणिनः पालयिष्यसि" इति प्रतिपादितम् ; भगवतः लक्ष्म्यास्तु "लक्ष्म्या सह हृषीकेशः" इत्युक्तमप्रधानकर्तृत्वञ्च स्फोर्यते । अत्र भूश्च माचेति द्वन्द्वे । अनुप्रासवशात् धर्मादित्वाश्रयणेन भूशब्दस्य पूर्वनिपातः । अथवा दोषप्रधानलीलाविभूति विषये क्षमाया आवश्यकत्वेनाऽभ्यर्हितत्वात्तदभिमानिन्या भुवः पूर्व निपातः। यद्वा "भोग्या वामपि नान्तरीयकतया पुष्पांगरागैस्समम्" इति श्रीश्रीशयोर्भोग्यवर्द्धकत्वैकस्वभावायाः भूदेव्याश्शब्दतोऽपि तयोस्संश्लेषान्तरायत्वं माभूदिति भूशब्दस्य पूर्वनिपातः । भूमासहायतायां हेतुमाह भूमेति । बहोर्भावो भूमा 'बहोर्लोपो भूच बहोः इति निष्पन्नोऽयं शब्दः इह धर्मिनिर्देशः । अल्पप्रतिसम्बन्धिनिर्देशत्वा-



दित्युक्तम् । एवञ्च "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इत्युक्तोऽपरिच्छिन्नानन्दस्वरूपः कोऽपि अवाङ्मनसगोचरः पुरुषः।तस्मिन् रंगधाम्नि कुशली क्षेमवान् भवतु अयमप्याशिषि लोट्।आशीर्हि आशासनं देशिकानां भगवत्पर्यन्तानामाचार्याणाम् । देशिकः आचार्यः । भगवन्तं प्रति द्रविडोपनिषत्तात्पर्यार्थोपदेष्टृत्वादेव सर्वान्प्रत्यप्याचार्योऽयं वरवरमुनिः । कालेकाले सर्वस्मिन्काले मंगलानि कल्पयन्मंगलाशासनं कुर्वन् तस्मै पूर्वोक्तपत्नी परिच्छदान्विताय श्रीरंगनाथाय दिव्यं त्रिपाद्विभूतीयम्, विभवं समृद्धिम्, दिशतु प्रददातु "आशिषि लोट्"। एवं सति मदिष्टसत्ता सिध्यतीति भावः ॥ ७ ॥

अ०—पूर्ववत्—स्वसञ्जीवनहेतुभूतवरवरमुनिसत्तायाम्प्रणाडिकयोपयोगिनीं श्रीमतीङ्कावेरनन्दिनीप्रादुर्भूतिमतीं दक्षिणां दिशङ्कृतज्ञतया प्रणमति—

मू०—तस्यै नित्यम्प्रादिशति दिशे दक्षिणस्यै नमस्याम् ।
यस्यामाविर्भवति जगताञ्जीवनी सह्यकन्या ॥
पुण्यैर्यस्याः क्षितितलजुषं पूरुषं रङ्गभूषां ।
पश्यन्धन्यो वरवरमुनिः पालयन्वर्तते नः ॥ ८ ॥

व्या०—तस्य इति॥ वरवरमुनिः यस्या कावेर्य्याः पुण्यैः सुकृतैः क्षितितलजुषं भूतलं प्राप्तवन्तं भूतेल मोदमानं वा । "जुषि प्रीतिसेवनयोः" इति धातुः । रंगभूषां रंगधामालङ्कारभूतं पूरुषं सर्वापेक्षितप्रदं श्रीरंगनाथम् । पुरुबहु साधति ददातीति पूरुषः पुरुशब्दः

"उपपदेष्णुदान" इत्यस्मात् "अन्येभ्योऽपि दृश्यते" इति उ प्रत्ययः। उक्तञ्च "पुरुदानाच्च केशवः" इति। पृषोदरादित्वात् षत्वं पूर्वपदे दीर्घश्च "पुरुषः पूरुषस्तथा" इति द्विरूपकोशः पश्यन् अनवरतं नेत्राभ्यां पिबन् पालयन् अस्थानरक्षाव्यसनेन मङ्गलाशासनैरक्षणं कुर्वन्। धन्यस्सन् "लब्ध्वा कुलधनं राजा" इति निरुपाधिकधनभूतश्रीरङ्गनाथलाभवान्सन् नः अस्मदर्थम्। वर्तते देशकालसम्बन्धवान्भवति, सत्तावान्भवतीति यावत् न इति तादर्थ्ये चतुर्थी सा तथा विधाययत्तदोर्नित्यसम्बन्धात् सेति लभ्यते। जगताञ्जीवनी जीवन्ति जनाः अनयेति जीवनी। "करणाधिकरणयोश्च" इतिल्युट्त्वान्ङीप्समस्तजगज्जीवितभूतश्रीरंगनाथस्थितिहेतुत्वादेव जगताञ्जीवनी-इति व्यपदिश्यते यद्वा "व्यपगतप्राणात्मसञ्जीवनीम्" इत्यत्रैव जीवनी शब्दः मोक्षरूपनित्यनिरुपाधिकजीवनहेतुपरः। "कावेरीतीरमाश्रित्य" इत्यादिकमिहानुसन्धेयम्। सह्यकन्या कावेरी यस्यां दिशि आविर्भवति प्रकाशते प्रवहतीत्यर्थः। मरुद्वृधेत्यनुक्त्वा सह्यकन्येति सह्यमपि स्मरति उपकारस्मृत्या तस्यै पादत्रयोक्तसर्वस्थितिनिदानभतायै दक्षिणस्यै दिशे अनेन ग्रन्थकृतामुदीच्यत्वं गम्यते। नमस्यां प्रणामं नित्यं प्रतिदिनम्। प्रदिशति प्राभृतत्वेन प्रददातीत्यर्थः। अयञ्जन इति शेषः। प्रदिशतु इति पाठे सर्वोऽपि लोक इति शेषः। ईदृशमहोपकारकारिण्यै। सर्वलोकैरपि प्रणामः कर्तव्य इति बहुमानातिशयो गम्यते दिशे वापि नमस्कुर्यादित्येतत्सूचितम्॥ ८॥



अ०–इत्थं श्लोकद्वयेन धर्मिसिद्धिमभिसन्धायोपरितनश्लोकैरपेक्षितधर्मान्विदधाति–

मू०–आशापाशैरवधिविधुरैः स्वैरमाकृष्यमाणं।
दूराद्दूरं पुनरपि न मे दूयतामेव चेतः॥
अन्तःकृत्वा वरवरमुने नित्य मंघ्रिद्वयं ते।
धाराकारस्मरणसुभगं निश्चली भूय तत्र॥ ९॥

व्या०–आशापाशैरिति॥ हे वरवरमुने! अवधिविधुरैः अवधिः अवसानम्, तेन विधुरैः शून्यैः निरवधिकैरित्यर्थः। आशापाशै आशा एव पाशास्तैः बन्धकत्वेन सादृश्याद्रूपणम् स्वैरं प्रतिगातेन आकृष्यमाणं नीयमानं दूराद्दूरम् अत्यर्थं मे चेतः पुनरपि इतः परं नैव दूयताम्, नैव परितापम्भजतु।दूयमानत्वाभावः प्राप्तकाल इति भावः। प्राप्तकाले लोट् कथमिदमित्यत्राह, अन्त इति। धाराकारस्मरणसुभगं धारायास्तैलधारायाः आकार इवाकरो यस्य तथोक्ते स्मरणे सुभगं हृद्यम्। यथा यथा वैशद्यं भोग्यवस्तुनः तथातथा तदीयभोग्यतातिशयाऽभिव्यक्तिरिति भावः ते प्राप्तसुलभशेषिणः। अंघ्रिद्वयं पादद्वयम् अन्तः कृत्वा मध्ये निधाय तत्र अंघ्रिद्वये निश्चलीभूय निश्चलं भूत्वा वरवरमुने मे चेतः धाराकारस्मरणसुलभं ते अंघ्रिद्वयं अन्तः कृत्वा तत्र निश्चलीभूय पुनरपि भूयोऽपि अवधिविधुरैराशापाशैर्दूराद्दूरं स्वैरमाकृष्यमाणं यत् नैव दूयताम् इत्यन्वयः॥ ९॥

अ०–"सर्वं एव सः' सर्वं यदेव' वासुदेवः सर्वम्" इत्याह–

मू०–त्वम्मे बन्धुस्त्वमसि जनकस्त्वं सखा देशिकस्त्वम्।
विद्या वृत्तं सुकृतमतुलं वित्तमप्युत्तमं त्वम्॥

आत्मा शषी भवसि भगवन्! आन्तरश्शासिता त्वं ।
यद्वा सर्वं वरवरमुने ! यद्यदात्मानुरूपम् ॥ १० ॥

व्या०—त्वं मेबन्धुरिति ॥ हे भगवन् ! "सदाचार्येण सन्दृष्टा" इत्युक्तोत्तारकत्वौपयिकज्ञानशक्त्यादिपूर्ण ! वरवरमुने त्वंम्मे बन्धुरसि मे त्वदेकनिष्ठस्य बन्धुस्त्वमसि बंधुत्वं हि प्रियाऽप्रिययोः प्रियाऽप्रियभाक्त्वम्। बध्नातीति बन्धुः वर्तमाननिर्देशेन आत्मान्तबन्धुत्वं लभ्यते । एवं सर्वत्रापि त्वं जनको ऽसि उत्पादकोसि । उत्तरोत्तरजायमानस्वरूपसमृद्ध्यतिशयविशिष्टस्वरूपस्य सदोत्पत्तेर्जनकत्वमपि । सदातनमिति लट् उपपत्तिः "स हि विद्यातस्तञ्जनयति तच्छ्रेष्ठम्" इत्युक्तं वा । जनकस्त्वम्, त्वं सखासि समानं ख्यायत इति सखा, स्वरूपानुरूपभोगसाचिव्यवृत्तभोगकीर्तनविषयत्वादिना सखात्वं त्वं देशिकोऽसि हिताहितप्रवृत्तिनिवृत्त्युपदेष्टाऽसि त्वं विद्यासि "किं किं न साधयति कल्पलतेव विद्या" इत्युक्तविद्या भवसि त्वं वृत्तमसि तादृशविद्याकार्यभूतसदाचारोऽसि त्वं सुकृतमसि उक्तवक्ष्यमाणसकलनिदानभूतजन्मांतरीयसुकृतमसि "न जातुहीयते" इतिवदत्र वर्तमानत्वोपपत्तिः । अत एव चास्य मध्ये कीर्तनं त्वमुत्तमं वित्तमप्यसि स्वरूपानुरूपत्वात्मान्तभोगप्रयोजनत्वाऽऽपद्रक्षकत्वादिभिः प्रकृष्टधनभूतोऽसि । "उत्तमं स्वार्जितं वित्तम्" इत्युक्तस्वासाधारणवित्तं वा । त्वमात्माऽसि पूर्वोक्तं सर्वम्प्रति शेषी भवसि । शेषीभवसि तं प्रत्यपि

१ पूर्वोक्तं सर्वंप्रति शेषी भवसि, तं प्रत्यपि शेषीभूतस्त्वम् इति 'स्व' पुस्तके पाठः समीचीनपाठः पुस्तकान्तरादन्वेषणीयः ।



शेषीभूतस्त्वम् आन्तरः अन्तरः परमात्मा "य आत्मानमन्तरः" इत्युक्तेः । अन्तस्सम्बन्धी आन्तरः शासिता नियन्ता आन्तरश्शासिता परमात्मा, आन्तरश्शासिता त्वम् । "ज्ञानी त्वात्मा" इत्युक्तेः। अथवा किं प्रथमकीर्तनेनोक्तानुक्तं सर्वमपि त्वमेवेत्याह, यद्वेति । यद्वेति पूर्वोक्तप्रतिक्षेपार्थकः आत्मानुरूपं निष्कृष्टस्वरूपानुरूपम् । अत्र प्रसिद्धजनकादीनां तन्मात्रत्वम्, अस्य तु जनकादिसर्वविधत्वमिति भावः । आत्मा भवसीत्यत्र त्वमहमसीत्यर्थः । तथाच त्वदर्थत्वे ममत्वमपीष्टमिति भावः । आत्मा उपादाता "आप्नोत्यादत्त इति वा आत्मा" इति निरुक्तेः। शासिता नियामकः शेषी तज्जन्यातिशयभाक् ॥ १० ॥

अ०—अथाऽसाधारणं पञ्चमोपायतत्त्वप्रवर्तकत्वमाह—

मू०—आम्नायेषु स्मृतिभिरमितैस्सेतिहासैः पुराणैः
दृश्यं यत्नैर्यदिह विदुषां देशिकानां प्रसादात् ॥
स्वैरालापैस्सुलभयसि तत्पञ्चमोपायतत्त्वम्
दर्शंदर्शं वरवरमुने दैन्यमस्मद्विधानाम् ॥ ११ ॥

व्या०—आम्नायेष्विति ॥ हे वरवरमुने ! इह अन्यथाज्ञानादिपूर्णे संसारमण्डले विदुषा जानता, पुरुषेणेति शेषः । "विदेश्शतुर्वसुः" इति वर्तमानार्थकलडादेशस्य शतुर्वसुरादेशः अत एवाऽविरतज्ञानवत्त्वलाभः । अनवरतसर्वदुरीहविषयकज्ञानशीलेनेति यावत् । विदुषेति कर्तृसमर्पकम्, यत्नैः श्रवणमननरूपैर्हेतुभिः, दृश्यम् इत्यत्रान्वेति यद्वा प्रसादात् इत्यत्रान्वेति। यत्नैः बहुतरस्वानु-

वर्तनैः यः देशिकानाम्प्रसादः अनुग्रहः, तस्माद्धेतोः स्मृतिभिः
मन्वादिप्रणीताभिः सेतिहासैः भारतरामायणात्मकेतिहासयुक्तैः अ-
मितैः बहुभिः पुराणैः विष्णुपुराणादिभिश्च करणैः आम्नायेषु वेदेषु
करणस्यैवाऽधिकरणत्वविवक्षया सप्तमी । यत् पञ्चमोपायतत्त्वं द्रष्टुं
ज्ञातुं शक्यम्, तत्पञ्चमोपायतत्त्वम्। पञ्चमश्चाऽसावुपायश्चेति विग्रहः।
रामानुजाचार्यरूपचरमोपायः "ऊर्ध्वं नयन्त्युपायास्ते" इति तदी-
यात्यन्तपारतन्त्र्यात्मकोच्चैर्गतिप्राप्तिहेतुरुपायः । उपरि आयतीत्यर्थे
पृषोदरादित्वात् उपरिशब्दे रिलोपः णिचो लोपश्च । तस्य तत्त्वम्
स्वरूपम्। कर्मज्ञानभक्तिप्रपत्त्याचार्याभिमानात्मकानां पञ्चानामुपाया-
नां मध्ये पंचमोपायः आचार्यात्मकः,स च रामानुजार्य इति पर्यवसा-
नगतिः । अस्मद्विधानाम् अस्माकं पूर्वोक्तयत्नप्रसादाऽभिमाना-
तिशयितज्ञानादिविकलानामस्माकम्, विधाः प्रकारा इव विधाः
प्रकारा येषां तेषाम्।बहुत्वद्वयेन भूयस्तमत्वं लभ्यते । दैन्यं दीनत्वम्,
प्रणष्टस्वरूपकत्वं स्वरूपनाशमिति यावत् । दर्शंदर्शं दृष्ट्वा दृष्ट्वा ।
'दीङ् क्षये' इत्यस्मात् दीनशब्दो निष्पन्नः । कृपातिशयवशात्
पुनःपुनः दर्शमिति द्विरुक्तिः स्वैरालापैः आन्तरालिकप्रसक्तानुप्रस-
क्तसरसश्रीसूक्तिभिः । अस्मद्विधानां सुलभयसि सुलभं करोषि ।
बहुतरस्वानुवर्तनसाध्यबहुतराचार्यप्रसादबहुश्रुत्याद्युपकरणैरनवरता-
तिशयितज्ञानवता येन केनचित्कथंकथंचित् शक्यज्ञानश्चरमोपाय-
मनायासेन स्वैरभाषणैरज्ञानामस्मदादीनां भूयस्त्वन्न केवलं सुगमं
करोषि, किन्तु सुलभमपि करोषीत्यर्थः। वर्तमाननिर्देशेन सदा
करोषीति लभ्यते । ईदृशमहौदार्याद्धि "प्रपन्नजनचातकाम्बुदम्"



इति व्यपदिश्यन्त्येनम् । "कर्तुं त्यक्तुमपि प्रपत्तुमनलं सीदामि दुः-
खाकुलः" इत्युक्तम् । स्वरूपस्वातन्त्र्यचिन्तनहेतुकभीतिप्रयुक्तं वा
दीनत्वमिह दैन्यमित्यत्र विवक्षितम् । स्वैरालापैरित्यनेनाऽस्मद्वि-
धानां हितोपदेष्टृतादृशभवद्विषयेऽपि दुर्मानमूलकाऽसूयाप्रसवभूमि-
त्वमभिसन्धायोपदेष्टुपदेश्यमर्यादां गूहयित्वैव सरससँल्लापापदेशेन
तादृशार्थविशेषाऽऽवेदकत्वमित्यपि लभ्यते अत्र आत्मा येषु इत्यादिषु
"यस्य देवे" "देवमिवाचार्यम्" "गुरुरेव परं ब्रह्म" "साक्षान्नारायणो
देवः" "आचार्यवत्तया" "आचार्यवान् पुरुषो वेद" "येनैव गुरुणा
यस्य" "यस्यानुभावपर्यन्ता" "अन्वयादपि चैकस्य" "बालमू-
कजडान्धाश्च" "धन्याः केचन तेभ्योऽपि तेषामादेशवर्तिनः" "सि-
द्धिर्भवति वा नेति संशयोऽच्युतसेविनाम् । न संशयोऽस्ति तद्भक्तप-
रिचर्यारतात्मनाम्" "यत्र पूर्वे" "यत्र ऋषयः" "चक्षुषा तव सौ-
म्येन पूतास्मि रघुनन्दन । पादमूलं गमिष्यामि यानहं पर्यचा-
रिषम्" "नय मां निजभृत्यपार्श्वं कथन्नु विसृजे तव भृत्यदास्यम्"
इत्यादिकं द्रष्टव्यम्। इदमुपलक्षणम् आचार्योक्तीनामपि "पितामहं
नाथमुनिं विलोक्य" "यद्वा भागवताभिमानस्तव भरोऽहमकार्षीं"
"सत्यं सत्यं पुनस्सत्यं यतिराजो जगद्गुरुः" "भक्तिप्रपत्ती यदि
दुष्करे वो रामानुजार्यम्" "विष्णुः शेषी" "तन्निष्ठसंश्रयः" "तद-
नुबन्धमदावलिप्तो" "रामानुजः शरणमस्तु मुनिः स्वयम्" "अनुक-
ल्पभूतमुरभित्पदम्" "दिव्यापांगं दिशसि करुणे येषु सद्देशिकात्मा
क्षिप्रं प्राप्तावृषगिरिपतिं क्षत्रबन्ध्वादयस्ते ।" "तृणीकृतविरिञ्च्या-
दि" "कालत्रयेऽपि करणत्रय" इत्यादिकं द्रष्टव्यम् ॥ ११ ॥

अ०–अथ द्वाभ्यां श्लोकाभ्यां वरवरमुनीनामुक्तविधत्वे भगवान् श्रीरंगनाथ एव प्रमाणमित्याह–

मू०–सत्सम्बन्धो भवति हितमित्यात्मनैवोपदिष्टं ।
शिष्टाचारं दृढयितुमिह श्रीसखो रंगधुर्यः ॥
द्वारं प्राप्य प्रथितविभवो देवदेवस्त्वदीयं ।
दृष्ट्वैव त्वां वरवरमुने दृश्यते पूर्णकामः ॥१२॥

व्या०–सत्सम्बन्ध इति॥ हे वरवरमुने प्रथितविभवः प्रसिद्धसमृद्धिकः श्रीसखः श्रियःसखा रंगधुर्यः श्रीरंगनाथः सत्सम्बन्धः सतां "सन्तमेनं ततो विदुः" इति स्वरूपज्ञानेन लब्धसत्ताकानां, संम्बधः सहवासादिरूपसंसर्गः हितं परमपुरुषार्थसाधनं भवतीति आत्मनैव स्वेनैव उपदिष्टम् अज्ञातज्ञापनविषयकृतं गीतादिष्विति शेषः। शिष्टाचारं शिष्टानां तत्त्वहितपुरुषार्थेषु भ्रान्तिरहितानामाचारमनुष्ठानं दृढयितुम् अनुष्ठानेन स्थिरीकर्तुम् "यद्यदाचरति श्रेष्ठः" इत्युक्तेरिति भावः। श्रेष्ठतानियामकञ्च प्रथितविभवः श्रीसखः देवदेवः इति विशेषणत्रयोपादानम्। किञ्च श्रियापि "इह सन्तो न वा सन्ति सतो वा नानुवर्तसे" इत्यादिना सत्सम्बन्धस्य हितत्वमुपदिष्टमिति तस्या अपि सहागतिरावश्यकीति श्रीसख इत्युक्तम्। त्वदीयं द्वारं श्रीमदीयदिव्यावासद्वारं प्राप्य 'सुदूरमपि गन्तव्यम्' इतिवत् आसाद्य प्राप्तिरप्युद्देश्येति सूच्यते। त्वां दृष्ट्वैव पूर्णकामः पर्याप्तमनोरथः दृश्यते सर्वैरपि साक्षात्क्रियते स्वोपदेशस्याननुष्ठानलक्षणाऽप्रामाण्यपरिहाराय स्वयमनुष्ठातुमागत्येति विवक्षितम्, स्वोपदिष्टदृढीकरणं नान्तरीयक कृत्यं



त्वद्दर्शनलक्षणविलक्षणफललाभेन पूर्णमनोरथः श्रीरङ्गनाथ इत्यत्र सर्वेऽपि साक्षिणः स च भवन्माहात्म्यसाक्षीति भावः ॥ १२ ॥

अ०–द्वारं प्राप्य दृश्यते इत्युक्तोपसदनपूर्वकं "तद्विद्धि प्राणिपातेन परिप्रश्नेन सेवया। उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इति स्वोपदिष्टमर्थमनुष्ठानेना दर्शयन्नित्याह–

मू०–सोऽयम्भूयस्स्वयमुपगतो देशिकैस्संसदं ते।
श्रुत्वा गूढं शठरिपुगिरामर्थतत्त्वं त्वदुक्तम् ॥
आगोपालं प्रथयतितरामद्वितीयं त्वदीयं।
वाचां दूरं वरवरमुने वैभवं शेषशायी ॥ १३ ॥

व्या०–सोयम्भूय इति॥हेवरवरमुने! सोऽयं देवदेवत्वादिगुणविशिष्टोऽनुपदोक्तोपसदनविशिष्टश्च श्रीरंगनाथः देशिकै आचार्यपदनिर्वाहकैः नाथयामुनप्रमुखैरित्यर्थः। 'सहयोगे तृतीया' तैर्युक्तः सन् चिरोपासनविषयस्य ते तव संसदं श्रीमतीं दिव्यसभाम्,सम्यक् सीदन्त्यस्याम् इति संसत् सीदन्तीत्युक्तनिषसदनस्य सम्यक्त्वञ्च समीचीनकर्तृत्वप्रयुक्तमिति विलक्षणपुरुषप्रकाण्डाधिष्ठितत्वं व्यज्यते।अतोनसभामित्युक्तिः। भूयः पुनः पूर्वश्लोकोक्तागमनमनुवर्तनार्थं ततोऽन्यदिदमुपदेशसिद्ध्यर्थमिति पुनश्शब्दार्थोपपत्तिः। स्वयमुपगतः सन् स्वयमुपसन्नस्सन् स्वयमित्यनेनाचर्यासाधारणमर्चकपराधीनाखिलात्मस्थितित्वमपि परित्यक्तमिति व्यज्यते। त्वदुक्तं चिरोपासितेन त्वयोपदिष्टं शठरिपुगिराम् अन्यथाज्ञानादिनिरासकं भगवत्पराङ्कुशपाददिव्यसुक्तीनाम् अर्थतत्त्वम् अभिधेयस्वरूपं याथात्म्यं वा श्रुत्वा शब्देन बुद्ध्वा।यद्वा त्वत्

इति पृथक्पदम्पञ्चम्यन्तमू उक्तम् । कलिवैरिदासपादैर्व्यक्तं प्रतिपा-
दितम् । 'ब्रूञ्-व्यक्तायां वाचि' इति धातोः क्तप्रत्यये "ब्रूवोर्वचि
रिति वच्यादेशः। षट्त्रिंशत्सहस्रिकायां विस्तरेण व्याख्यातम् । गूढम्
एवमपि दुरवहशठरिपुगिरामर्थतत्वम्, त्वत् श्रुत्वा भवत्सकाशान्नि-
यमपूर्वकमधिगम्य । "आख्यातोपयोगे" इति पञ्चमी वाचांदूरं वाचा-
मगोचरम् अद्वितीयं नास्ति सदृशं द्वितीयं यस्य तथोक्तम् । त्वदीयं
समग्रगुरुपरम्पराविलक्षणं भवदीयम्। वैभवं माहात्म्यं न ह्याचार्येष्वेवं
श्रीरङ्गनाथो यत्र क्वचिदुपससादेति वा तत्त्वम्बुबुधे इति वा शुश्रुमः ।
शेषशायी सन् भुजंगशयस्सन् सहस्रवदनमधिष्ठितस्सन्वा आगो-
पालं गोपाला ह्यज्ञा इति प्रसिद्धं तानपि अभिव्याप्य,विशेषज्ञाऽविशे
षज्ञाविभागराहित्येनेत्यर्थः । प्रथयतितराम् अतिशयेन प्रख्यापयति
'प्रथप्रख्याने' अत्र शेषशायी इत्यनेनामुमर्थं सत्यापयामीति. भुजगश
यानस्सन् इति व्यज्यते । सत्यापयितारो हि भुजं गमं गृह्णन्ति नाहं
केवलं गृह्णामि, किन्तु तस्मिन् निर्भयश्शयनं करोमि इति । तस्मिन्
शयानस्सन् इति सत्याप्य वरवरमुनिवरवैभवे याथार्थ्यं दार्ढ्यं स्फार्यते।
सहस्रवदनशेषसाहाय्येन प्रख्याप्यवैभवस्य वा भूयस्तमत्वं व्यज्यते ।
अत्र वक्तव्यं सम्प्रदायतोऽवगन्तव्यम् ॥ १३ ॥

अ०-एवमनितरसाधारणमाहात्म्यमुक्तम्; "स्वयमाचरते यस्तु
आचारे स्थापयत्यपि" इत्युक्तं परार्थपरतन्त्रत्वरूपमुत्तारकत्वं परप्रवा
दयितृत्वरूपमुपकारकत्वं पुरुषकारत्वञ्चाह, यद्वा वरवरमुनिवरव्यति-
रिक्तविषये गुरुपुरुषकारोपायानां भेदेन नैकरूपत्वं हि तस्य अस्य
तु सर्वविधत्वेनैकरूपत्वमित्याह-



मू०-सिद्धोपायस्त्वमिह सुलभो लम्भयन्पूरुषार्था-
नज्ञातांश्च प्रथयसि पुनः यत्ततो देशिकस्त्वम् ॥
देवी लक्ष्मी भवसि दयया वत्सलत्वेन च त्वं ।
कोसौ यस्त्वां वरवरमुने!मन्यते नात्मानीनम्॥१४॥

व्या०-सिद्धोपायइति॥ हे वरवरमुने! पुरुषार्थान् पुरुषैरर्थ्यमा-
नमोक्षादीन् । अत्राऽऽर्त्तादिकचतुर्विधानामपि ग्रहणं, तेषाञ्चरमाविषये
ऽपि अविशेषात् लम्भयन्प्रापयन् ।पुरुषान् इति शेषः । सुलभः न तु
सुकरस्त्वम्, सिद्धोपायोऽसि सिद्धः चेतनव्यापारानपेक्षस्वरूपकः
उपायः पुरुषार्थसाधनभूतोसि । सुलभ इति सिद्धत्वं लम्भयन् इति
उपायत्वञ्च अत एव लम्भयन् इति णिजन्तेन णिजन्तोपायशब्द
विवरणम् । अत्रोपायसिद्धताप्रयुक्तं सर्वदाकार्योत्पत्तिप्रसंगम् । सुलभ
इत्युक्तोपायलाभहेतुभूतायाः पुरुषार्थान् इत्यत्रोक्तायाः प्रार्थनामात्रस-
न्तुष्टः । "प्रार्थनामतिः" "प्रपत्तिः शरणागतिः" "विश्वासपूर्व-
कम्" इत्यादौ प्रतिपादितायाः प्रार्थनाया अभावो वारयतीति संक्षेपः।
अज्ञातान्, स्वस्वरूपाद्यनभिज्ञान्प्रथयसि ज्ञापयसि इति । यत्ततो
देशिकोऽसि दिशति उपदिशति इति देशिकः आचार्यः । दिशतेः
कर्तरि णञ् । किञ्च, त्वं पूर्वोक्तधर्मद्वयविशिष्टस्त्वम् । दयया आभि-
मुख्यमात्रोद्भूतकृपया वत्सलत्वेन तथाविधवात्सल्येन च, अत एव हि
पुरुषकारस्य पुरुषकारानपेक्षा,देवी देवस्य स्वीकर्मानुगुणफलप्रदानात्म-
कव्यवहारशीलस्य प्रीतिविषयभूता 'दिवुक्रीडाविजिगीषाव्यवहारे'
त्यादि । इदञ्च पुरुषकारतोपयुक्तविशेषणम् । लक्ष्मीर्भवसि लक्ष्म्य-

भिष्ठातृप्रयुक्तपुरुषकारत्ववान् भवसि । अयःपिण्डो वह्निरितिवत् सामानाधिकरण्यम् । उक्तञ्च "एतत्सम्बन्धसापेक्षमन्येषाममलात्मनाम् । देविसूरिगुरूणाञ्च घटकत्वं न तु स्वतः" इति । यत एवं ततः यस्त्वाम् उपायादित्र्यात्मकं भवन्तम् । आत्मनीनम् आत्महितम् । हिताधिकारे आत्मनो यत्खञाविति खञ् न मन्यते न जानाति । असौ आत्मद्रोही कः किंस्वरूपः प्रेक्षावान् तव हि तत्त्वञानातीति भावः ॥ १४ ॥

अ०—भगवद्रामानुजाचार्यस्यैवोपायत्वं प्रसिद्धम्, इह तु वरवरमुनेस्तदुक्तमितीमं विरोधं तदभिन्नाभिन्नस्य तदभिन्नत्वनयनेन परिहरति—

मू०—नित्यं पत्युः परिचरणतो वर्णतो निर्मलत्वात् ।
वृत्या वाचां विबुधसरितश्चातुरीमुद्गिरन्त्या ॥
शेषः श्रीमानिति रघुपतेरन्तरेणाऽपि वाणीः
को नाम त्वां वरवरमुने कोविदो नावगन्तुम्॥ १५ ॥

व्या०—नित्यं पत्युरिति ॥ हे वरवरमुने!कः जन्तुः नित्यम्पत्युः परिचरणतः सर्वकालशेषिविषयकाऽशेषशेषवृत्या वर्णतो निर्मलत्वात्, श्वेतवर्णनिष्ठनैर्मल्यात् सप्तम्यास्तसिः । विबुधसरितः गगनगंगायाः चातुरीं विभ्रमम् उद्गिरन्त्या उद्वमन्त्या वाचां वृत्या व्यापारेण च हेतुभिः हेतुना वा त्वाम् उक्तहेत्वाश्रयंस्त्वाम् । श्रीमान् शेष इति अवगन्तुं श्रीरिह " लक्ष्मणो लक्ष्मिसम्पन्नः " इत्युक्तलक्ष्मणावतारश्री "श्रीमान् रामानुजार्यः पदकमलयुगम्" "श्रीमानाविरभूद्भमौ रामानुजदिवाकरः' "श्रीमँल्लक्ष्मणयोगि" इत्याद्युक्तरामानुजावतार



श्रीश्च विवक्षिता । तादृशशेष इत्यनुमातुम्, यद्वा श्रियः कैङ्कर्यसम्पच्छोभा, ऋग्यजुःसामाथर्वणोपलक्षिता वाक्च तद्वान् । "ऋचो यजूँषि सामानि "सा हि श्रीरमृता सताम्" इत्युक्तेः । तादृशशेष इत्यनुमातुम् । रघुपतेः वाणीमन्तरेणाऽपि अस्मद्कुलधनश्रीरघुकुलनाथश्रीसूक्तिं विनापि अवगन्तुमित्यन्वयः। न कोविदो नाम सर्वोऽपि कोविद इत्यर्थः । अत्र शब्दानुग्रहीतानुमानस्य प्रामाण्यमिति वासनया रघुपतेरन्तरेणापीत्युक्तम् । एतेन स्वस्य वरवरमुनिश्शेषावतार इति रघुनाथोऽकथयत् इति स्फोर्यते । इदञ्च सम्प्रदायतोऽवगन्तव्यम् ॥ १५ ॥

अ०—इत्थं शेषावतारत्वरूपयुक्तिं साधयित्वा पूर्वोक्तविरोधपरिहारं निगमयति—

मू०—सत्यं सत्यं पुनारिति पुरा सारविद्भिर्यदुक्तं ।
ब्रूमश्श्रोत्रैश्शृणुत सुधियो मत्सरं वर्जयित्वा ॥
तत्त्वं विष्णुः परमनुपमं तत्पदं प्राप्यमेवं ।
तत्सम्प्राप्तौ वरवरमुनिर्देशिको दीर्घदर्शी ॥ १६ ॥

व्या०—सत्यंसत्यमिति ॥ हे सुधियः ! शास्त्रशीलनपरिष्कृतबुद्धयस्सारविद्भिर्व्यासेन पूर्वाचार्यैश्च सत्यं सत्यम्पुनरिति यदुक्तम् "सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते । वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम्" इति व्यासेन "सत्यं सत्यं पुनस्सत्यं यतिराजो जगद्गुरुः । स एव सर्वलोकानामुद्धर्त्ता नात्र संशयः" इत्याचार्यैश्च यदुक्तं तद्ब्रूम तत् इति लभ्यते मत्सरं वर्जयित्वा "बोद्धारो मत्सर

स्ताः इति साधुत्वनियतान्यकृतशुभकार्यद्वेषरूपमात्सर्यमुत्सार्य्य श्रोत्रैः शृणुत श्रोतृनिर्माणसाफल्यं लभध्वमिति भावः। किन्तदित्यत्राह, तत्वम् इत्यादि। विष्णुः परंतत्वम् अनुपमं तत् पदं तस्य विष्णोः स्थानम्। प्राप्यं पुरुषैरिति शेषः। दीर्घदर्शी सर्वज्ञः वरवर मुनिः। एवम्पूर्वोक्तरीत्या रामानुजावतारत्वात् तत्सम्प्राप्तौ चरमपर्वलक्षणविष्णुपदप्राप्तौ देशिकः दाता आचार्य इति वार्थः। तस्य सम्प्राप्तिरिति विग्रहः। आप्तिः प्राप्तिस्सा प्राप्तिः आप्तिः प्रथमपर्व विधया प्राप्तिः मध्यमपर्वविधया सम्प्राप्तिः चरमपर्वविधया एवं प्राप्यमित्यत्राऽपि आप्यम् आआप्यं प्रआप्यमिति द्रष्टव्यम्। "अकस्सवर्णे" इति दीर्घोत्राऽनुशिष्टः॥ १६॥

अ०—वरवरमुनिसम्बन्धतद्व्यतिरेकौ मुक्तिनरकयोः प्रयोजकावित्याह—

मू०—लक्ष्यं यस्ते भवति भगवंश्चेतसश्चक्षुषो वा।
तुभ्यं द्रुह्यन्त्यपि कुमतयो ये वृथा मत्सरेण॥
मुक्तिं गच्छेन्मुषितकलुषो मोहमुध्दूय सोऽयं।
नानाभूतान्वरवरमुने नारकान्प्राप्नुयुस्ते॥ १७॥

व्या०—लक्ष्यमिति॥ हे भगवन्! वरवरमुने! यः ते चेतसः अथवा चक्षुष अन्यार्थोन्मीलितचक्षुषः लक्ष्यं शरव्यम्भवति शरव्यविषयी भवति। कुमतयः कुबुद्धयः। ये मत्सरेण अन्यकृतशुभकार्यद्वेषरूपमत्सरेण हेतुना वृथा निरर्थकं तुभ्यं सर्वप्राणिप्राणनभवद्विषये द्रुह्यन्ति अपकारं कुर्वन्ति क्रुधद्रुहेति चतुर्थी सोऽयं त्वदपांगविषयी-



भवनरूपभाग्यवत्तया प्रशस्तः पुरुषः मुषितकलुषस्सन्स्वेनाऽप्यज्ञात अपगतसर्वपापस्सन्। 'मुषस्तेये' कः मोहम् अन्यथाज्ञानादिकम् उद्धूय विमुच्य "अश्व इव रोमाणि विधूय" इति श्रुतिः स्मार्यते। मुक्तिं परमपुरुपार्थकाष्ठां गच्छेत् प्राप्नुयात्। ते द्रोग्धारः इमे च मुषितकलुष इत्युक्तमोषणकर्तारः 'अप्रियादुष्कृतम्' इत्युक्तेः। नानाभूता अविद्यमानेषु अपर्याप्त्या भयोऽपि बहुधोत्पन्नान् नारकान् समूहस्यैव शेषत्वविवक्षयाऽणूप्रत्ययः। नरकसमूहानित्यथः प्राप्नुयुः॥ १७॥

अ०—यथाकश्चित् वरवरमुनिसम्बन्धोऽपि मुक्त्यव्यभिचारितोपाय इत्याह—

मू०—स्वप्नेऽपि त्वत्पदकमलयोरञ्जलिं कल्पयित्वा।
श्रुत्वा यद्वा सकृदपि विभो! नामधेयं त्वदीयम्॥
निष्प्रत्यूहं वरवरमुने! मानवः कर्मबन्धान्।
भस्मीकृत्य प्रविशति परं प्राप्यमेव प्रदेशम्॥१८॥

व्या०—स्वप्न इति॥ हेवरवरमुने! मानवः मनुष्यत्वजातिमान् यः, कश्चन वा भवत्विति भावः। त्वत्पदकमलयोः प्राप्तशेषिणस्तव, कमलवत्पावनभोग्यचरणविषये अञ्जलिं स्वप्नेऽपि कल्पयित्वा स्वामिकदशायामपि कृत्वा स्वामिककृत्याकृत्ययोर्न फलजनकप्रायश्चित्तीयत्वे, किन्तु यथा स्वफलविशेषसूचकत्वमात्रमित्यपि शब्दप्रयोगः। प्रस्तुतप्रभावातिशयावेदनाय मतान्तरवत् स्वप्नमयथार्थमङ्गीकृत्य वाऽपि शब्दप्रयोगः। "वपुरादिषु योऽपि

कोऽपि वा" इतिवदिति । स्वप्नेऽपि निद्रायामपि मुखं व्यादायेति-स्वापोत्तरव्यादानवत् त्वद्दिगभिमुखं स्वापकालिकवातप्रयुक्ताऽञ्जलिं वा कृत्वेत्यर्थः । यद्वा पूर्वोक्तकल्पाभावे त्वदीयं नामधेयं सकृदपि एकवारमपि श्रुत्वा, न कीर्तनक्लेश इति भावः । शब्दो हि वायुना नीयमानो ऽवर्जनीयश्रवण इति हृदयम् । निष्प्रत्यूहं निर्विघ्नं प्रारब्ध निवृत्तिपूर्वकं कर्मबन्धान् तदितरपूर्वोत्तरपुण्यपापरूपान् भस्मीकृत्य नाशयित्वा परं प्रकृष्टं प्राप्यं प्राप्तव्यम् । प्रदेशमेव वैकुण्ठं-दिव्यभुवनरूपमेव प्रविशति प्रदेशभेदेन चरमाधिकार्युचितो भाग इति सूच्यते ॥ १८ ॥

अ०–वरवरमुनिवैभवज्ञस्य मयोक्तमिदं रोचेत स एव दुर्लभ इत्याह–

मू०–यस्मिन् किञ्चिद्विधिरपि यथा वीक्षितुं न क्षमः स्यात् ।
वक्तुं शक्तः क इह भगवन् ! वैभवं तत्त्वदीयम् ॥
यस्सर्वज्ञः स खलु भगवानीक्षते तत्समग्रं ।
तस्याऽपि त्वं वरवरमुने ! मन्यसे तत्त्वमेकः ॥१९॥

व्या०–यस्मिन्निति ॥ हे भगवन् ! वरवरमुने ! यथा येन कारणेन विधिरपि सर्वजगत्स्रष्टा चतुर्मुखोऽपि यस्मिन् त्वदीयवैभवे किञ्चित् एकदेशमपि वीक्षितुम्, न क्षमस्स्यात् न योग्यः स्यात् । तत् तादृशम्, त्वदीयं वैभवम् इह आज्ञाशक्तप्रायप्रपञ्चे कः वक्तुं शक्तः न कोऽपीत्यर्थः । अलीकत्वं प्रतिक्षिपति ( यः ) इति सर्वज्ञः यः सहजसार्वज्ञवान् यः । भगवान् स खलु परमैश्वर्यविशिष्टः स एव ।



तत् समग्रं तव वैभवं समग्रम् । ईक्षते अनवधिकत्वाद्यशेषविशेषयुक्तं साक्षात्करोति एकस्त्वम् अद्वितीयस्त्वम् । तस्य तत्त्वमपि अनवधिकातिशयैश्वर्यस्य तस्य स्वभावमपि समग्रम् । मन्यसे अनवधिकत्वाद्यशेषविशेषयुक्तं जानासि ।अतो मया पूर्वश्लोकोक्तं तस्मा एव न रोचत इत्याशयः ॥ १९ ॥

अ०–वरवरमुनिकटाक्षवीक्षणवशात् स्वस्य तद्वैभवविषये किञ्चिज्ज्ञतापीत्याह–

मू०–कालोऽनन्तः कमलजनुषो न व्यतीताः कियन्त–
स्तिर्यङ्मर्त्यस्तृणवनलताः प्रस्तरोवाऽप्यभूवम् ॥
इत्थं व्यर्थैर्जनिमृतिशतैरेनसामेव पात्रं ।
दिष्ट्या सोऽहं वरवरमुने दृष्टिगम्यस्तवासम् ॥ २० ॥

व्या०–काल इति ॥ हे वरवरमुने ! कालोऽनन्तः अपरिच्छिन्नः। कियन्तः कीदृशसंख्याकाः कमलजनुषः कमले भगवन्नाभिकमले पद्मे जनुः उत्पत्तिर्येषां तथोक्ताः चतुर्मुखाः न व्यतीताः न गताः। अहं तिर्यगभूवं पश्वादिरभूवम्, मर्त्योऽभूवम् अनुलोमप्रतिलोमाभ्यां ब्राह्मणादिरभूवम् । तृणवनलताः तृणानि वनानि लताश्चेति द्वन्द्वः । तृणवनलता अभूवम्, गतोऽहमित्यर्थः प्रस्तरो वा शिला वाऽभूवम् अहल्यावासवदत्तावदिति भावः । अनादौ संसार इत्येतन्न्यायसूचनाय कालो ऽनन्त इत्युक्तम् । स्रष्टारश्च बहव इति वक्तुं कमलजनुष इत्याद्युक्तम्, यद्वा कालो ऽनन्त अपरिच्छिन्नः यत एव ततोऽहं व्यतीताः कियन्तः कमलजनुषो नाऽभूवम्,

कियन्त इत्येतत्, अथमया विपारिणमय्य कियान् मर्त्यो नाभूवम्, इत्यादियोजनीयम् । इत्थं पूर्वोक्तरीत्या व्यर्थैः जनिमृत्योरभावे मृतिजन्योरभाव इति परस्परव्यतिरिक्तफलरहितैः परमपुरुषार्थरहितैर्वा । अनेन "वृथैव भवतो याता भूयसी जन्मसन्ततिः" इति वचनं स्मार्यते । जनिमृतिशतै अनेन "जायस्व म्रियस्व" इति श्रुतिः स्मार्यते । शतशब्द इहाऽनन्त्यवाचक अनन्तैर्जननमरणैर्हेतौ तृतीया अस्याश्च दिष्ट्येत्यत्रान्वयः । जनिमृतिशतैर्या दृष्टिस्तयेत्यर्थः । दिष्टिर्विधिस्स च भगवत्कृपा तेनाऽप्यनतिक्रमणीयत्वात् तस्यास्तथा व्यपदेशः । एतेन " एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः । जीवे दुःखाकुले विष्णोः करुणा कापि जायते" इति वचनं स्मार्यते । दिष्ट्येत्यानन्दार्थको निपातो वा । अत्र पक्षे जनिमृतिशतैरिति उपलक्षणे तृतीया अहमित्यत्रान्वेति सोऽहमित्थं व्यर्थैर्जनिमृतिशतैः दिष्ट्या केवलदुर्गतिहेतुकभगवत्कृपया तव दृष्टिगम्य आसम् त्वत्कटाक्षविषयोऽभवम् । "असभुवि" लडुत्तमपुरुषः । अतएव तव वैभवे किंचिज्ज्ञताऽपि मे जाता इत्याशयः ॥ २० ॥

अ०—"माधवांघ्रिद्वयोपायो माधवांघ्रिप्रयोजनः" इत्युक्तकेशवैकान्त्यभाजामपि वरवरमुनिरपक्षित इत्याह—

मू०—मुक्त्वैव त्वां वरवरमुने सम्पदां मूलकन्दं ॥
क्षेमं किञ्चिन्नखलु सुलभं केशवैकान्त्यभाजाम् ।
दृष्टो दैवात्तव पुनरनुक्रोशकोशैरपाङ्गै-
र्निर्मर्यादः पशुरपि भृशं नीयते निर्मलत्वम् ॥ २१ ॥



व्या०—मुक्त्वैवेति॥हे वरवरमुने!केशवैकान्त्यभाजाम्,केशवे क्लेशानाद्युत्पत्तिहेतौ क्लेशनाशने प्रशस्तकुंतलेवा भगवति ऐकान्त्यं प्राप्यप्रापकनैय्यत्यं भजन्तीति केशवैकान्त्यभाजः तेषां केशवैकान्त्यभाजाम्। सम्पदां मूलकन्दं त्वामुक्त्वा केशवैकान्त्यं भजन्ति ये तेषाम् । क्षेमम्, प्राप्तांशपालनमपि न खल सुलभं नैव सुलभम् । निर्मर्यादः विधिनिषेधरहितः पशुः जननितदितरविषययोर्वैपरीत्येन वर्तमानपशुसदृशः पुरुषः । अनुक्रोशकोशैः, अनुक्रोशस्य मुक्तकण्ठक्रोशनहेतुपरदुःखदुःखित्वरूपकरुणायाः कोशैः वित्तगृहभूतैः तवाऽपाङ्गैः, दैवात् दृष्टः हेतुं विना केवलादृष्टवशाद्दृष्टस्सन् भृशम् अतिशयेन निर्मलत्वम् । निर्दोषत्वम्, नीयते प्राप्यते अत्र "दुराचारोपि यस्याऽनुभावपर्यन्ता बुद्धिः" इत्यादि द्रष्टव्यम् ॥ २१ ॥

अ०—"चितः परमचिल्लाभे प्रपत्तिरपि नोपधिः । विपर्यये तु नैवास्य प्रतिषेधाय पातकम्" इति श्लोकच्छायया वरवरमुनिवराऽसंबन्धसम्बन्धयोस्सतोः प्रपत्तिपातके अकिञ्चित्करे इत्युक्तम्, इदानीं स्वस्य वरवरमुनिपादैकान्त्यप्राप्तौ विस्मयते—

मू०—मर्त्यङ्कञ्चन्वरवरमुने ! मानहीनः प्राशंसन् ।
पादौ तस्य प्रपदनपरः प्रत्यहं सेवमानः ॥
तच्छेषत्वं निरयमपि यश्श्लाघ्यमित्येव भुङ्क्ते ।
सोऽयं प्राप्तः कथमिव परं त्वत्पदैकान्त्यवृत्तम् ॥२२॥

व्या०—मर्त्यमिति ॥ हे वरवरमुने! यः अयञ्जनः कञ्चन्मर्त्यम् अभिजनविद्यावृत्त्येष्वन्यतमेनापि शून्यं केवलं मनुष्यत्वजात्यव-

च्छिन्नम्, मानहीनः आत्मसंभावनामूलचित्तसमुन्नत्या हीनश्शून्यः प्रशंसन् प्रकर्षेण स्तुवन् सन् अत्र च "माने गच्छति वारयन्त्युपशमे क्ष्मामालिखन्त्यां ह्रियाम्" इति श्लोको योजयितव्यः।प्रपदनपरः अपेक्षितयाचनापरस्सन् तस्य स्तुत्याऽभिमुखस्य तस्य पादौ चरणौ प्रत्यहं प्रतिदीनं सेवमानश्च सन् तद्विषयकसंवाहनाद्यनुकूलवृत्तिं कुर्वाणश्च सन् निरयमपि अप्राप्तत्वहेयत्वाभ्यां नरकतुल्यमपि तच्छेषत्वं तस्य पुरुषाधमस्य शेषत्वम्, तादर्थ्यम् श्लाघ्यमित्येव प्राप्तत्व भोग्यत्वाभ्याममभिनन्दनास्यमित्येवेति जानन्नेव भुंक्ते सुखरूपज्ञानविषयीकरोति एवकारेण न तु कदाचिदपि तदीयदुःखरूपतां जानन्निति लभ्यते अत्र पूर्वं हेयपुरुषदर्शनं ततोऽस्य मानहानिः, अनन्तरं तत्प्रशंसा, अनन्तरं तथा प्रीतेन तेन पादप्रसारणम्,अनन्तरं तत्प्रसारितपादशुश्रूषा, अनन्तरं तद्वशीकरणमनन्तरन्तम्प्रति स्वापेक्षितयाञ्चा अनन्तरं तदभ्युपगन्तृतच्छेषत्वभोग इति क्रमो व्यज्यते भुंक्त इति वर्तमान समीपभूते लट्। सोऽयं तादृशोऽयं परम् "इन्द्रियेभ्यः परा ह्यर्थाः" इतिवत् दुष्प्रापं त्वत्पदैकान्त्यवृत्तम् त्वदीयश्रीपादविषयकोपायोपेयाऽध्यवसायरूपवृत्तिम् कथमिव प्राप्तः केन प्रकारेण प्राप्तः, इति विस्मयो गम्यते अत्र स्वरूपज्ञानानन्तरं सोऽहमभुञ्जे इति वक्तव्ये परोक्षनिर्देशं करोति तस्य पूर्वमसत्वात् सोऽहं प्राप्त इति वक्तव्ये सोऽयमिति वदति अहं शब्दोच्चारणभयादिति ॥ २२ ॥

अ०—पूर्वोक्तवृत्तप्राप्तिरपि तत्कटाक्षहेतुकेत्याह—



मू०—नित्यानां यः प्रथमगणनां नीयसे शास्त्रमुख्यैः।
कृत्याऽऽकृत्या भवसि कमलाभर्तुरेकान्तमित्रम् ॥
देवः स्वामी स्वयमिह भवन्सौम्यजामातृयोगी।
भोगीश त्वद्विमुखमपि मां भूयसा पश्यसित्वम्॥२३॥

व्या०—नित्यानामिति ॥ हे भोगीश शैत्यसौरभ्यमार्दवस्वभावक भुजगपते शास्त्रमुख्यैः भगवच्छास्त्रप्रभृतिभिः यस्त्वं नित्यानां कदाचिदप्यस्पृष्टप्रकृतिसम्बन्धानां शेषशेषाशनादीनाम्, प्रथमगणनां तेषां मध्ये आदिगणनां नीयसे प्राप्यसे तद्धेतुमाह—कृत्येति।यस्त्वम्; कृत्या अशेषशेषवृत्त्यात्मकव्यापारेण, आकृत्या निवासशय्यासनपादुकेत्युक्ततदुपयुक्तशरीरभेदैश्च कमलाभर्तुः श्रियःपतेः एकान्तमित्रं भवसि नियतमित्रमसि त्वम् त्वद्विमुखमपि माम् तादृशे त्वयि आभिमुख्यमात्रेणाऽपि शून्यं माम् इह संसारमण्डले देवः स्वामी सौम्यजामातृयोगी भवन्सन् देवः शेषी स्वामी स्वेषु स्वत्वाभिसन्धानवान् तादृशवरवरमुनिरूपेणावतरन् सन्, भूयसा अतिशयेन पश्यसि कटाक्षविषयीकरोषि ॥ २३ ॥

अ०—वरवरमुनिः स्वयमेवात्मानमंगीचकारेत्याह—

मू०—अर्थौदार्यादपि च वचसामञ्जसा सन्निवेशा-
दाविर्भाष्यैरमलमतिभिर्नित्यमाराधनीयम् ॥
आशासानैर्वरवरमुने नित्यमुक्तैरलभ्यं।
मर्त्यो लब्धुं प्रभवति कथं मद्विधः श्रीमुखं ते॥२४॥

व्या०—अर्थौदार्यादिति ॥ हे वरवरमुने ! अर्थस्याभिधेयस्य औदार्यात् महत्वात् अर्थेऽभिधेये विषये; औदार्यात्

दातृत्वान्महार्थप्रतिपादकत्वाद्वा अनेकार्थप्रतिपादकत्वाद्वेत्यर्थः । "उदारो दातृमहतोः" इति कोशः । वचसामञ्जसा सन्निवेशात्; अपिपदानां संग्रहेणावस्थानादपि चेत्यनुक्तप्रसादादीनां समुच्चयः आविर्बाष्पैः प्रसृताधिकाश्रुभिः अमलमतिभिस्तथा सारग्रहणौपयिकपरिणामेन निर्दोषबुद्धिभिर्महद्भिरिति शेषः । नित्यमाराधनीयं नित्याग्निहोत्रादिषु द्रव्यकालनियमराहित्येन पूजनीयम् आशासानैः अपेक्षातिशयवद्भिः नित्यमुक्तैः अलभ्यम्, त्वत्कृपां विना स्वयत्नेन दुर्लभम्। ते श्रीमुखं भवत्सन्निधेरागतं श्रीमँल्लेख्यम् मद्विधो मर्त्यः मादृशहेयजन्तुः कथम् केन हेतुना लब्धुं प्रभवति शक्नोति नैव शक्नोति, किन्तु भवत्कृपैव तन्निमित्तमिति भावः। इदञ्चसम्प्रदायतोऽवगन्तव्यम् ॥ २४ ॥

अ०—"रघुपतेरन्तरेणाऽपि वाणीम्" इत्युक्तं विशदयति—

मू०—साराऽसारप्रमितिरहितस्सर्वथा शासनं ते ।
सद्यः श्रीमन् ! कपिकरकृतां मालिकामेव कुर्याम् ॥
नोचेदेतद्वरवरमुने ! दूरदूरं श्रुतीनाम् ॥
मौलौ कुर्यात्पुरुषवृषभो मैथिलीभागधेयम् ॥ २५ ॥

व्या०—सारासारेति ॥ हे श्रीमन् ! परमपुरुषसम्भावनीयतात्मकसम्पन्निधे वरवरमुने ! साराऽसारप्रमितिरहितोहम् उपादेयहेयविषयकप्रमात्मकज्ञानरहितोऽहम् । तद्विषयकभ्रान्तिमानहमिति लभ्यते ते शासनम्, भवन्नियोगलेख्यम् । सद्यः दर्शनदिन एव कपिकरकृताम्मालिकाम् तद्वद्विशकलिताम् । कुर्यामेव कर्तुमर्ह एव श्रुतीनां दूरदूरम्, वेदानामगोचरः मैथिलीभागधेयम्, जानकीभाग्यरूपम्।पुरुष-



वृषभः पुरुषश्रेष्ठः अस्मत्कुलधनरघुपतिरित्यर्थः।एतत्ते शासनम्।मौलौ दिव्यमूर्ध्नि नो कुर्य्याच्चेत । तदा सद्यस्ते शासनं कपिकरकृतमालिकासदृशं कुर्यामेवेत्यन्वयः । इदमपि सम्प्रदायतोऽवगन्तव्यम् ॥२५॥

अ०—इत्थं वरवरमुनिश्रीमुखलोभ उक्तः अथ तत्फलमाह—

मू०—लक्ष्यं त्यक्त्वा यदपि विफलो जायते रामबाणो ।
वाणी दिव्या वरवरमुने ! जातु नैवन्त्वदीयम् ॥
सोऽयं सर्वम्मदभिलषितं वर्षति श्रीमुखाब्द—
स्तस्मै नित्यन्तदिह परमं धाम कस्माद्दुरापम् ॥२६॥

व्या०—लक्ष्यं त्यक्त्वेति ॥ वरवरमुने ! रामबाणो यद्यपि अमोघत्वेन प्रसिद्धःदाशरथिशरो यद्यपि लक्ष्यन्त्यक्त्वा यदपि विफलो जायते जायेतापि त्वदीया दिव्या वाणी तु जात्वपि कदापि विफला नैव जायते विफलेत्यनुषक्तस्य विपरिणामः सोऽयम्, सेयं वाणी श्रीमुखाब्दः श्रीमुखजलदस्सन् यत एव विधेयप्राधान्यात्पुंस्त्वं सोयमित्यस्य। सर्वं मदभिलषितं वर्षति सर्वाण्यपेक्षितानि मह्यं ददातीत्यर्थः । तस्मै मदभिलषितम् इत्यत्राऽभिलाषाश्रयत्वेन पूर्वोपस्थिताय मह्यमित्यर्थः । यस्मादेवं तत्तस्मात् परमं धाम परमं स्थानम् । इह मद्विषये कस्मात् केन हेतुना दुरापम्, दुःखेनाऽऽप्तुं योग्यम् अपि तु स्वापं सुखेनाऽऽप्तुं योग्यमित्यर्थः ॥ २६ ॥

अ०—"नारायणं गुरुवरं वरदं विदन्मे" इत्यत्र वक्तव्यम् "अकृत्रिमत्वच्चरणारविन्द"इत्यादिस्थानीयं वरदनारायणाना वरवरमुनिवरप्रेमस्थानत्वमाह—

मू०—प्रेमस्थानं वरवरमुने ! सन्तु सन्तश्शतं ते ।
तुल्यः को वा वरदगुरुणा तेषु नारायणेन ॥
सानुक्रोशस्स तु मयि दृढं सर्वदोषास्पदेऽस्मिन् ।
मामेवं ते मनसि कुरुते मत्समः को हि लोके ॥ २७॥

व्या०—प्रेमस्थानमिति ॥ हे वरवरमुने ! ते परमकारुणिकस्य तव प्रेमस्थानम् अभिमतविशेषविषयभूताः शतम् अनन्ताः सन्तः महापुरुषाः सन्तु इष्टापत्तिविषया एव त इति भावः । तथापि तेषु त्वदभिमतविशेषविषयीभूतेषु मध्ये को वा नारायणेन वरदगुरुणा वरदनारायणगुरुणा तुल्यः तत्तुल्यस्त्वदभिमतविषयवान् न कोऽपीत्यर्थः । ज्ञानव्यवसायप्रेमसमाचारात्मकपदत्रयार्थनिष्ठातारतम्यमेवाऽऽचार्याभिमतविशेषतारतम्यमूलमिति हृदयम् । सर्वेषां दुराचारत्वादीनामखिलानां दोषाणां हेयकृत्यानाम् आस्पदे आवासभूते अस्मिन् दोषाणां वाचामगोचरत्वात्तदीयसार्वज्ञस्यैव गोचर इत्यंगुल्या निर्दिशति—अस्मिन्निति। मयि दृढं सानुक्रोशः तथाविधमद्विषयकाऽविचाल्यपरमकारुणिकत्ववान् यथायथा दुःखभूयस्तथातथा तदधीनदुःखातिशयात्मककृपातिशय इति भावः । स वरदनारायणगुरुः मां स्वीयनिर्हेतुककृपाविषयं माम् । ते हृदि स्वविषयकनिरतिशयप्रेमवतस्तव दिव्यहृदये एवं कुरुते नित्यमुक्तैरपि दुर्लभश्रीमुखप्रेषणाऽर्हं करोति। क्रियाफलस्य स्वस्वरूपनिष्पत्तेर्वरदनारायणात्मककर्तृगामित्वात्कुरुत इत्यात्मनेपदं प्रयुक्तम् । हि यस्मादेवं तस्मात् लोके सर्वेषु लोकेषु मध्ये को मत्समः मया तुल्यः न कोऽपीत्यर्थः । शरण्यस्य शरणागतिनिष्ठापूर्णपुरुषविषयीकरणं हि वैधम् , तत्कृपाविषयपुरुषविषयीकरणं तु रागप्राप्तं गुणवत्ताप्रथानिबन्धनञ्चेति तादृशस्य स्वस्य न कोऽपि सदृश इति भावः । एवं स्थिते यत्तत्र "देव प्रसीद" इति प्रसादनं कृतम् । तत् "प्रणामं कीर्तनं विष्णोः स्मरणं वापि केवलम् । एकैकमपि चांगानां प्रपत्तिः प्राज्ञसंश्रयात्" पांचरात्रे इति रीत्याऽप्रतिषेधपरमिति संक्षेपः ॥ २७॥

अ०—सर्वथा वरदनारायणवरवरमुनिभ्यामन्येन न किञ्चित्साध्यमित्याह—

मू०—भक्त्युत्कर्षं दिशति यदि मे पादपद्मे त्वदीये ।
तस्मादस्मै भवति वरदस्सार्थनामा गुरुर्मे ॥
यद्वा तस्मै वरवरमुने ! यद्यहं प्रेमयुक्तो ।
धन्यस्त्वं मामनुभजासि तत्किन्न मन्ये यदन्यैः ॥२८॥

व्या०—भक्त्युत्कर्षमिति॥ हेवरवरमुने! सार्थनामा प्रार्थितप्रदत्वाऽवयवार्थयुक्तनामवान् वरदः वरदनामवान् अत एव सार्थनामेति अत्रोपस्थितिरस्य नाम्नो भवति मे गुरुः मदाचार्यः त्वदीये पादपद्मे भक्त्युत्कर्षं त्वदीयपादपद्मविषयकपरमभक्तिं प्राप्य रुच्यतिशयरूपां पुनर्विश्लेषभीरुत्वरूपां वा यदि दिशति ददाति यदि वरदगुरुरिति अनुषज्यते तस्मात्त्वदत्तभक्त्युत्कर्षाद्धेतोः अस्मै भवति इमम्मां रक्षितुं भवति 'क्रियार्थोपपदस्य०' इति चतुर्थी स्वातिमात्रप्रावण्यविषयविषयप्रावण्यातिशययुक्तमद्रक्षणानुकूलकृतिमान् स्वयमेव भवतीत्यर्थः। यद्वापूर्वोक्तकल्पाभावे अहं त्वत्पादभक्तिविकलोऽहं तस्मै प्रेमयुक्तो यदि तादृशभवदभिमतविषयवरदनारायणगुरुवरमुखोल्लासहेतु तद्विषयप्रेमयोगवांश्चेत्त्वम्,तद्विषयनिरतिशयप्रेमवांस्त्वम्।धन्यः सन् एतावन्मात्रेण निरतिशयधनलाभजन्यप्रीतितुल्यप्रीतिमान्सन्।"धनगणं लब्धा"इति सूत्रेण द्वितीयान्ताद्धनशब्दाल्लब्ध्यर्थे यत्प्रत्ययः । माम्, भवत्प्रेमविषय

कप्रेमयुक्त माम् अनुभजसि अवसरं प्रतीक्ष्याऽन्वग्भूय मदनुकूलमाचरसि तच्च मोक्षप्रदानादिकम्। तस्मै प्रेमयुक्त इत्यत्रापि तदुल्लासयितुमित्यर्थे क्रियार्थोपपदस्येति चतुर्थीत्युक्तार्थलाभः। यस्मादेवं तस्मात् अन्यैर्यत् उक्तोभयव्यतिरिक्तैस्साध्यं यत, तत्किम् न किमपीत्यर्थः। गम्यमानाऽपि क्रियाविभक्तीनां प्रयोजिकेति तृतीया ॥ २८ ॥

अ०—अथवा द्वितीयकल्प एव मुख्य इत्याह—

मू०—यत्सम्बन्धाद्भवति सुलभं यस्य कस्याऽपि लोके ।
मुक्तैर्नित्यैरपि दुरधिगं दैवतं मुक्तिमूलम् ॥
तं त्वामेवं वदति वरदे सौहृदं मे यदि स्यात् ।
तस्यैव स्याद्वरवरमुने सन्निधौ नित्यवासः ॥ २९ ॥

व्या०—यत्सम्बन्धादिति ॥ हे वरवरमुने ! मुक्तैः निरस्तसंसारसम्बन्धैः नित्यैः अस्पृष्टसंसारसम्बन्धैः अपि दुरधिगम्, दुःखेनाऽधिगच्छन्त्यास्मिन्निति दुरधिगम्। "अन्यत्राऽपि दृश्यते इति वक्तव्यम्" इति वार्तिकेन दुर् अधि अनयोरुपसर्गयोरधिकरणेऽर्थे गमिधातोर्डप्रत्ययः। नित्यमुक्तकर्तृकदुःखयुक्तगमनाधिकरणं तैर्दुर्लभमिति यावत् नित्यमुक्तै दुरधिगमित्यत्र "कर्तृकर्मणोः कृति" इति षष्ठ्या अनित्यत्वात् तृतीया। तदनित्यत्वे "ज्ञापकन्तु तदर्हम्" इति निर्देशः "अन्तर्धौ येनाऽदर्शनम्" इति निर्देशश्चेति वक्तव्यम्। मुक्तिमूलम्, मोक्षसाधनं दैवतं देवतैव दैवतम्। स्वार्थिकोऽण् प्रत्ययः स्वार्थिकाः प्रत्ययाः प्रकृतितो लिंगवचनानि अतिवर्तन्त इति नपुंसकत्वञ्च। श्रियः पतिरूपं रामानुजाचार्यात्मकं वा दैवतं यत्सम्बन्धात् यस्य वरवरमुनेस्सम्बन्धात अद्वेषप्रभृतिपरमभक्तिपर्यन्तेष्वन्यतमायस्य कस्याऽपि



अभिजनादिनाऽहंकुर्वाणस्य वा तैरपि हीनस्य वा सुलभं भवति सुखेन लब्धुमर्हं भवति लोके पश्यामीत्यर्थः। तन्त्वं तादृशं त्वाम् एवं वदति उपायत्वेन बोधयाने वरदे वरदानारायणे गुरौ विषये मे सौहृदं स्यात् यदि तद्विषये मम शोभनहृदयवत्वं स्याद्यदि हृदयस्य शोभनत्वञ्च तादृशमहोपकारिविषये असूयारहितत्वम् एतच्च प्रायेण दुर्लभमिति "इदन्तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे, न च मां योऽभ्यसूयति" इति चोक्तं भगवता व्याख्यातञ्च "असूयाप्रसवभः" इत्यत्र कलिवैरिदासपादैः। सौहृदं मैत्री वा मम तस्मिन् दुर्मानवशेन गौरव्यताप्रयुक्तभक्त्यभावेऽपि साम्यबुद्ध्या गुणवशाच्च मैत्री स्यात्, सा वा स्यादिति भावः। अत्र "सुहृद्दुर्हृदौ मित्राऽमित्रयोः" इत्यादेशहृच्छब्दत्वात् "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्यत्राऽस्य ग्रहणमिति नोत्तरपदवृद्धिरिति स्पष्टम्। यशोदया सौहृदादीनामित्यत्र यमकरत्नाकरव्याख्याने अन्यथा सौहार्द्दमिति स्यात् इति तदा तस्यैव सन्निधौ तस्य वरदनारायणगुरोरभ्यर्ण एव नित्यवासः स्यात्, नियतवासः स्यात् ॥ २९ ॥

अ०—"स्वाधीनकुशलास्सिद्धिमन्त" इति न्यायेन स्वाधीनपरमपदगमने विलम्ब्यलीलाविभूतौ वरवरमुनीनां वासो मादृशचेतनार्थ इत्याह—

मू०—सर्वावस्थासदृशविविधाऽशेषगस्त्वत्प्रियाणां ।
त्यक्त्वा भर्तुस्तदपि परमं धाम तत्प्रीतिहेतोः ॥
मग्नानग्नौ वरवरमुने मादृशानुन्निनीषन् ।
मर्त्याऽवासो भवसि भगवन् ! मंगलं रंगधाम्नः ॥ ३० ॥

१ द्रविडोपनिषद्भाष्ये इति शेषः भगवद्विषय इति प्रसिद्धिनाम स्तोत्ररत्नव्याख्यानन्तु श्रीकृष्णपादैः कृतामिति प्रसिद्धम्।

व्या०—सर्वावस्थेति। हे भगवन्! स्वाधीनोभयविभूते "भगः श्रीः" इति कोशः। वरवरमुने! त्वत्प्रियाणाम्, त्वयि प्रीणन्तीति त्वत्प्रियाः त्वद्विषयकप्रीतियुक्ता इत्यर्थः। "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्यये प्रिय इति रूपम्। त्वत्प्रियो येषामिति वा त्वदीयप्रीतिविषया इत्यर्थः। तेषां सर्वास्ववस्थासु जागरादिषु सदृशा उचिताः विविधाः अनेकप्रकाराः ये अशेषाधारकादयः तत्तां गच्छन्तीति सर्वावस्थासदृशविविधाऽशेषगः। अशेषशब्दो भावप्रधानपरः तत्प्रसिद्धम्। परमं सर्वोत्कृष्टम्, भर्तुः मूलमन्त्रप्रधानप्रतिपादितनवविधसम्बन्धमध्याऽभ्यर्हितचेतननिष्ठाऽनन्यार्हशेषतानिरूपकशेषित्वविशेषवतः श्रियःपत्युः धाम स्थानमपि त्यक्त्वा त्यजिरिहासम्बन्धार्थकः अगत्वेत्यर्थः। परमपदस्य स्वाधीनतास्फोरणार्थं त्यक्त्वेत्युक्तम्। विलम्बितगमनेच्छारूपमानसत्यागो वा तूर्णमनपेक्ष्येत्यर्थः। अपिशब्देन "सतीमपि ज्ञातिकुलैकसंश्रयां जनोऽन्यथा भर्तृमतीं विशंकते" इत्युक्तदोषोऽपि मादृशचेतनार्थमंगीकृत इति व्यज्यते तत्प्रीतिहेतोः विग्रहेण सह ज्ञानिविषयकात्यादररूपभर्तृप्रीत्यात्मकफलाय। हेतुः फलं कारणश्चेत्युक्तम्। अग्नौ संसाराग्नौ मग्नान् अवगाढान्। अत्र "वरं हुतवह" इत्यादि द्रष्टव्यम्। मादृशान् स्वस्य प्राचुर्येण भवाग्निमज्जनमिति मादृशान् इत्युपमानत्वमुक्तम्। उन्निनीषन् उद्धर्तुमिच्छन् मर्त्यावासस्सन्। मर्त्यानामावासो यस्य तथोक्तस्सन्। निरुक्तभर्तृप्रीत्यर्थमस्मदाद्युद्धारणार्थञ्च मनुष्यलोकवासी सन्। रंगधाम्नो मंगलं भवसि श्रीरंगात्मकदिव्यदेशस्य परमनिःश्रेयसभूतोऽसि ॥ ३० ॥

१ पिता च रक्षकः शेषी भर्ता ज्ञेयो रमापतिः।



अ०—उन्नयनप्रकारमाह—

मू०—प्रत्यूषार्कद्युतिपरिचयस्मेरपद्माभिताम्रं ।
पश्येयं तद्वरवरमुने पादयुग्मं त्वदीयम् ॥
पाथो बिन्दुः परमणुरपि स्पर्शवेधी यदीयो ।
भावेभावे विषयमुषितान्पावयत्येव लोकान् ॥ ३१ ॥

व्या०—प्रत्यूषार्केति ॥ हे वरवरमुने! परमातिशयेनाऽणुरपि स्वल्पमपि स्पर्शवेधी स्वस्पृष्टवस्तुनः सुवर्णतापादकवस्तुविशेषवत्स्वस्पृष्टानामतिमात्रदोषवतामपि अत्यन्तनैर्मल्यसाधकः स्पर्शवेधीतुल्य इत्यर्थः। सादृश्यं च दर्शितविधया यदीयः यस्य वरवरमुनिश्रीपादस्याऽवनेजनसम्बन्धिपाथोबिन्दुः दिव्यतीर्थकणः भावेभावे जन्मनिजन्मनि विषयमुषितान् शब्दादिना दूरमपहृतान् लोकान् जनान्। पावयति पूतान्करोति तत् तादृशम्। प्रत्यूषार्कद्युतिपरिचयेन प्राभातिकसूर्यकिरणसम्पर्केण स्मेरं विकसितं यत्पद्मं कमलं तद्वदभिताम्रम्। अभितोरक्तम्, अनेन पावनत्वभोग्यत्वे उक्ते। त्वदीयम्, प्राप्तशेषि भवदीयं पादयुग्मं श्रीचरणयुगलं पश्येयं द्रष्टुमाशंसावानस्मि। अत्र "तत्स्पृष्टमखिलं शुचिः" "समित्पशुच्छेदनयोग्यशस्त्रे रसेन हेमीकरणं समानम्" इत्यादिकमनुसन्धेयम् ॥ ३१ ॥

अ०—वरवरमुनिः "विपर्यये तु नैवास्य प्रतिषेधाय पातकम्" इति पांचरात्रोक्तरीत्या निर्हेतुकमिदानीमंगीकुर्वन् एतावन्तं कालं कुतो नांऽगीचकारेति अनुतापवशेन तमुपालभते—

१ 'लोकस्तु भुवनेजे' इति कोशः।

व्या०—सर्वावस्थेति । हे भगवन् ! स्वाधीनोभयविभूते "भगः श्रीः" इति कोशः । वरवरमुने ! त्वत्प्रियाणाम्,त्वयि प्रीणन्तीति त्वत्प्रियाः त्वद्विषयकप्रीतियुक्ता इत्यर्थः। "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्यये प्रिय इति रूपम् । त्वत्प्रियो येषामिति वा त्वदीयप्रीतिविषया इत्यर्थः। तेषां सर्वास्ववस्थासु जागरादिषु सदृशा उचिताः विविधाः अनेकप्रकाराः ये अशेषाधारकादयः तत्तां गच्छन्तीति सर्वावस्थासदृशविविधाऽशेषगः । अशेषशब्दो भावप्रधानपरः तत्प्रसिद्धम् । परमं सर्वोत्कृष्टम्, भर्तुः मूलमन्त्रप्रधानप्रतिपादितनवविधसम्बन्धमध्याऽभ्यर्हितचेतननिष्ठाऽनन्यार्हशेषतानिरूपकशेषित्वविशेषवतः श्रियःपत्युः धाम स्थानमपि त्यक्त्वा त्यजिरिहासम्बन्धार्थकः अगत्वेत्यर्थः। परमपदस्य स्वाधीनतास्फोरणार्थं त्यक्त्वेत्युक्तम् । विलम्बितगमनेच्छारूपमानसत्यागो वा तूर्णमनपेक्ष्येत्यर्थः । अपिशब्देन "सतीमपि ज्ञातिकुलैकसंश्रयां जनोऽन्यथा भर्तृमतीं विशंकते" इत्युक्तदोषोऽपि मादृशचेतनार्थमंगीकृत इति व्यज्यते तत्प्रीतिहेतोः विग्रहेण सह ज्ञानिविषयकात्यादररूपभर्तृप्रीत्यात्मकफलाय । हेतुः फलं कारणञ्चेत्युक्तम् अग्नौ संसाराग्नौ मग्नान् अवगाढान् । अत्र "वरं हुतवह" इत्यादि द्रष्टव्यम्।मादृशान् स्वस्य प्राचुर्येण भवाग्निमज्जनमिति मादृशान् इत्युपमानत्वमुक्तम् । उन्निनीषन् उद्धर्तुमिच्छन् मर्त्यावासस्सन् । मर्त्यानामावासो यस्य तथोक्तस्सन् । निरुक्तभर्तृप्रीत्यर्थमस्मदाद्युद्धारणार्थञ्च मनुष्यलोकवासी सन् । रंगधाम्नो मंगलं भवसि श्रीरंगात्मकदिव्यदेशस्य परमनिःश्रेयसभूतोऽसि ॥ ३० ॥

१ पिता च रक्षकः शेषी भर्ता ज्ञेयो रमापतिः ।



अ०—उन्नयनप्रकारमाह—

मू०—प्रत्यूषार्कद्युतिपरिचयस्मेरपद्माभिताम्रं ।
पश्येयं तद्वरवरमुने पादयुग्मं त्वदीयम् ॥
पाथो बिन्दुः परमणुरपि स्पर्शवेधी यदीयो ।
भावेभावे विषयमुषितान्पावयत्येव लोकान् ॥ ३१ ॥

व्या०—प्रत्यूषार्केति ॥ हे वरवरमुने ! परमातिशयेनाऽणुरपि स्वल्पमपि स्पर्शवेधी स्वस्पृष्टवस्तुनः सुवर्णतापादकवस्तुविशेषवत्स्वस्पृष्टानामतिमात्रदोषवतामपि अत्यन्तनैर्मल्यसाधकः स्पर्शवेधीतुल्य इत्यर्थः । सादृश्यं च दर्शितविधया यदीयः यस्य वरवरमुनिश्रीपादस्याऽवनेजनसम्बन्धिपाथोबिन्दुः दिव्यतीर्थकणः भावेभावे जन्मनिजन्मनि विषयमुषितान् शब्दादिना दूरमपहृतान् लोकान् जनान् । पावयति पूतान्करोति तत् तादृशम् । प्रत्यूषार्कद्युतिपरिचयेन प्राभातिकसूर्यकिरणसम्पर्केण स्मेरं विकसितं यत्पद्मं कमलं तद्वदभिताम्रम् । अभितोरक्तम्,अनेन पावनत्वभोग्यत्वे उक्ते । त्वदीयम्, प्राप्तशेषि भवदीयं पादयुग्मं श्रीचरणयुगलं पश्येयं द्रष्टुमाशंसावानस्मि । अत्र "तत्स्पृष्टमखिलं शुचिः" "समितपशुच्छेदनयोग्यशस्त्रे रसेन हेमीकरणं समानम्" इत्यादिकमनुसन्धेयम् ॥ ३१ ॥

अ०—वरवरमुनिः "विपर्यये तु नैवास्य प्रतिषेधाय पातकम्" इति पांचरात्रोक्तरीत्या निर्हेतुकमिदानीमंगीकुर्वन् एतावन्तं कालं कुतो नांऽगीचकारेति अनुतापवशेन तमुपालभते—

१ 'लोकस्तु भुवनेजने' इति कोशः ।

मू०—नित्ये लोके निवसति पुनः श्रीमति क्ष्मागतानां
दूरीभावः प्रभवति पुरा दुष्कृतदुर्विपाकैः ॥
सम्प्रत्येवं सकलसुलभो यद्यपि त्वं दयाब्धे
मामेवैकं वरवरमने मन्यसे वर्जनीयम् ॥ ३२ ॥

व्या०—नित्य इति ॥ हे वरवरमुने क्ष्मागतानां, महतां पुण्यपुञ्जेन परमपुरुषार्थसिद्धियोग्यभूमिंगितानामपि जनानां दुर्विपाकैः दुःखैकसाधननानाविधपरिणामवद्भिः दुष्कृतैः दुरितैर्हेतुभिः इदं निवसतीत्यत्रान्वेति । श्रीमति स्वरूपानुरूपभूयस्तमसम्पन्निधौ त्वयि नित्ये लोके श्रीवैकुण्ठे निवसति सति क्ष्मागतानां दुष्कृतैर्निवासं कुर्वति सति दूरीभावः भवद्विप्रकर्षः पुरा प्रभवति अतिशयेनाऽभूत् । सन्तीहपराच्छात्रा इतिवत् भूते लट् । सम्प्रति पुनः इदानीन्तु दयाब्धे अनवधिकातिशयकरुणानिधे त्वं यद्यपि सकलसुलभः सकलैर्देशकालकरणसन्निकर्षसौलभ्यवान् चाक्षुषविषयत्वपूर्वकसमाश्रयणीयत्ववान् सकलेषु परव्यूहविभवाऽन्तर्याम्यर्चाऽऽचार्यरूपेषु षट्सु प्रकारेषु पूर्वप्रकारव्यावृत्तसौलभ्यवानिति सत्यमेव तथाप्येवं सत्यपि एकम्मां केवलं मां वर्जनीयमेव अवश्यवर्जनविषयमेव मन्यसे न तु जात्वप्यवर्जनीयं मन्यसे अमंस्थाः। वर्तमानसमीपे लट् । वर्जनीयं परिहरणीयम्। मन्यसे एव अमंस्था एव । अत एव एतावत्कालं नांगीचकर्थोर्त हृदयम् । अथवा श्रीमुखप्रेषणादिना मानसांगीकारेऽपि चक्षुर्विषय-

१ "पूर्वस्मादपि पूर्वस्माज्ज्यायांश्चैवोत्तरोत्तरः । सौलभ्यतो जगत्स्वामी सुलभो ह्युत्तरोत्तरः" इति अर्चावतारस्याऽवतारान्तरात्सौलभ्यमुक्तं. तदपेक्षयाप्याचार्यरूपावतारस्य सौलभ्यमर्थात्सिद्धमिति भावः ।



त्वाऽभावात्तव मद्विषयकवर्जनसंकल्प इति फलबलात्कल्प्यत इति मन्यसे इति यथाश्रुतमेव बोध्यम् । अत एव सकलसुलभ इति संगच्छते ॥ ३२ ॥

अ०—बहुधा हि चरमाधिकारिण इहत्यामात्मयात्रां निवर्तयन्ति, चरमविषये तद्यथा "दुर्गतावपि जातायां त्वद्गतो मे मनोरथः । याद नाशं न विन्देत तावताऽस्मि कृती सदा" इत्युक्तरीत्या केचन प्राप्तिनिरपेक्षं प्राप्यरुच्यैव सुधाप्रायया निवर्तयन्ति आत्मयात्राम् केचन "बोधयन्तः परस्परम्"इति रीत्या"कृष्णायन्त्यपराकाचित्" इति रीत्या चाऽनुकरणादिधारणहेतुतदीयसाहाय्येन केचन स एवोपर्युपरि अस्य पराम्प्रीतिमुपावहन् "वृत्त्याख्यफलतां याति तदेवाऽमृतमुच्यते" इति रीत्या चाक्षुषपूर्वकाऽऽश्रयणानन्तरं सम्बन्धस्मरणेन केचन "आमोक्षं लक्ष्मणार्य ! त्वत्प्रबन्धपरिशीलनैः" [ प्रार्थनापंचके ] इति रीत्या तद्विषयकतत्प्रणीतप्रबन्धाभ्यां केचन "शरीरं वसुविज्ञानम्" [पांचरात्रे] इति रीत्या प्रधानभूतकैङ्कर्यादिना तत्रैकविधाया अपि नास्त्यवकाशो मम त्वद्विप्रकृष्टस्येत्याह—

मू०—त्वत्पादाब्जप्रणयविधुरो दूरगस्त्वत्प्रियाणां ।
त्वत्सम्बन्धस्मरणविमुखो वीतरागस्त्वदुक्तौ ॥
त्वत्कैङ्कर्यत्वदुपसदनत्वत्प्रणामाऽनाभिज्ञो ।
दूये दूरं वरवरमुने ! दोषलक्षैकलक्ष्यम् ॥ ३३ ॥

१ प्रार्थनापञ्चकाख्योऽयम्प्रबन्धः वात्स्यवरदगुरुशिष्याग्रेसरेण घटिकासहस्रार्येण प्रणीत इति श्रीवैष्णवसमयाचारनिष्कर्षाख्यग्रन्थे लिखितम् । केचन वरवरमुनिशतकक्तृ देवराजगुरुवरेणेति, अन्ये वरदनारायणगुरुवरपौत्रेणेति च वदन्ति ।

व्या०–त्वत्पादाब्जेति॥ हे वरवरमुने ! त्वत्पादाब्जप्रणयेन पावनत्वभोग्यत्वाभ्यां कमलतुलितप्राप्तशेषिभवदीयश्रीपादविषयकचक्षुःप्रीत्यनन्तरभाविमनस्सङ्कल्पदवाच्यप्रेमविशेषरहितः । अनेन प्राप्यरुच्यभाव उक्तः । त्वत्प्रियाणां त्वद्विषयकप्रीतिमतां त्वत्प्रीतिविषयाणाञ्च दूरगः विप्रकृष्टदेशवर्ती । अनेन तदीयसहायाभाव उक्तः।त्वत्सम्बन्धस्मरणविमुखः चाक्षुषपूर्वकाश्रयणानन्तरभाविभवदीयसम्बन्धनिरन्तरस्मृतिरहितः । अनेन स एवोपर्युपर्यस्येत्यादेरभाव उक्तः । तवोक्तिः त्वदुक्तिः तस्यां कर्तरि कर्मणि च षष्ठी । त्वत्प्रणीतप्रबन्धे त्वद्विषयकप्रबन्धे च वीतरागः अनुत्पन्नप्रीतिमान् । त्वत्कैङ्कर्यस्य आचार्यादित्र्यात्मकत्वं[1] मुखोल्लासैकप्रयोजनव्यापारस्य त्वदुपसदनस्य तत्त्वोपदेशनाज्ञाननिवर्तकत्वत्सान्निध्यवस्थानस्य, त्वत्प्रणामस्य त्वदुपदेशश्रवणानन्तरं "यदा सर्वज्ञोऽहम्" इति रीत्या पूर्वकाले चिरानुवृत्तसर्वज्ञताभिमानभंगपुरस्सरं छिन्नमलद्रुमपतनसदृशसर्वाविधप्रणामस्य चानभिज्ञः तद्विषयज्ञानरहितः । पूर्वोक्तसर्वनिदानमाह-दोषेति । दोषाणाम्–प्राप्यरुच्यादिप्रतिबन्धकदुरितानाम्, लक्षस्य शतसहस्रिकायाः एकलक्ष्यम् अद्वितीयनिलयभूतः । यद्वा-दोषाणां ये लक्ष्यभूतास्तेषामेकलक्ष्यमित्यर्थः । तथाविधोऽहम्, दूरं त्वद्विप्रकृष्टदेशे वर्तमानस्सन्, दूये परितापवानस्मि । इदञ्च देवराजगुरोः स्वकीयग्रामावस्थानकालाभिप्रायं वेदितव्यम् ॥ ३३ ॥

अ०–मत्स्वभावपर्यालोचनायां त्वत्पादाब्ज प्रणयोऽप्यपराधकोटावन्वेतीत्याह ।

---

१ भगवद्भागवताऽऽचार्यरूपत्र्यात्मकत्वमित्यर्थः ।



मू०–प्रादुर्भूतप्रचुरमतयो ये परब्रह्मसाम्यात् ।
पश्यन्त स्तत्पदमनुपमं ये पुनश्शुद्धसत्त्वाः ॥
सर्वैरेतैर्वरवरमुने ! शश्वदुद्दिश्य सेव्यम् ।
कांक्षत्येतत्कथमयमहो कामकामः पदाब्जं ॥ ३४ ॥

व्या०–हे वरवरमुने ! कामेषु काम्यमानदेहादिषु, कामः "संगात् सञ्जायते कामः"[1] इत्युक्तरीत्या संगानन्तरभाविविषयानुभवाभावव्यतिरेके नियतस्पृहाविशेषो यस्य तथोक्तोऽयञ्जनः कर्तृसमर्पकमिदं कांक्षतीति प्रधानक्रियायामन्वेति ये परब्रह्मसाम्यात् आविर्भूताऽपहतपाप्मत्वादिगुणाष्टकरूपपरमात्मपरमसादृश्याद्धेतोः प्रादुर्भूतप्रचुरमतयो भवन्ति निवृत्तनिश्शेषदोषतयाऽसंकुचितज्ञानप्रसरा भवन्ति ये पुनः ये च शुद्धसत्त्वाः कदाप्यस्पृष्टदोषान्तःकरणास्सन्तः अनुपमं तत्पदं पश्यन्तो भवन्ति । "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति सर्वैरप्येतैः पूर्वोक्तैर्नित्यैश्च, शश्वत् सर्वकालमुद्दिश्य प्रार्थ्य सेवितव्यम् । एतत् वाचामगोचरमाहिमवत्वात् अंगुल्या निर्दिशति एतदिति प्रतिपत्तिसन्निकर्ष इह विवक्षितः । पदाब्जं भवदीयश्रीपादांबुजम्, कथं कांक्षति कुतो हेतोरिति नित्यानाञ्च तादृशभवत्प्रेमविषयवरवरमुनिवरविषयकैंकर्यं साध्यविवृद्धिरूपतया उद्देश्यम्, शेषिमुखोल्लासैकप्रयोजनस्य हि चेतनस्य यावता तन्मुखोल्लासातिशयासिद्धिः स एवोपादेयः शेषिमुखोल्लासश्च विषयभेदेन तरतमभावापन्नः "मम मद्भक्तभक्तेषु प्रीतिरभ्यधिकाभवेत्"[2] इति शेषिवचनेन भगवतः

---

टि०– १ ऋग्वे०सं । २ भारते ।

स्वस्वभक्ततद्भक्तेषु यथाक्रमं प्रीत्यधिकप्रीत्यभ्यधिकप्रीतीनामवगमात्। एवञ्च तादृशभगवदीयाभ्यधिकप्रीतिविषयभूतवरवरमुनिविषयककैंकर्यस्य साध्यविवृद्धिरूपत्वमिति परमास्तिकाग्रेसरा विदांकुर्वन्तु॥ ३४॥

अ०—पूर्वोक्तं स्पष्टमाह—

मू०—प्रातः क्षेमं प्रकृतिमधुरैः प्रागपि त्वत्कटाक्षैः।
सोऽयञ्जन्तुस्त्वदनुभजनं त्वत्त एवाऽऽप्तुमिच्छन्॥
क्रन्दत्युच्चैः कलुषमतिभिः संवसन् कामकामैः।
कालक्षेपो वरवरमुने! तत्कथं युज्यते ते॥ ३५॥

व्या०—प्राप्त इति॥हे वरवरमुने! प्रकृतिमधुरैः स्वभावरमणीयैः त्वत्कटाक्षैः भवदपांगवीक्षितैः प्राक् एतत्पूर्वकालं क्षेमम् स्वरूपनाशाभावरूपम् स्थितिपरिपालनं प्राप्तोप्यधिगतोऽपि,सोयञ्जन्तुः स्वस्य क्रिमिकीटादिसमाधिना जन्तुरिति व्यपदेशः त्वत्त एव त्वत्सकाशादेव। अपादानार्थकपञ्चम्यास्तसिः। त्वदनुभजनम् त्वद्विषयकानुसञ्चरणादिकैंकर्यम्, आप्तुमिच्छन् लब्धुमभिलषन्सन्। कामकामैः स्वरूपविरुद्धपुरुषार्थस्पृहावद्भिः। कलुषमतिभिः तन्मलक्रोधलोभाद्यविलबुद्धियुक्तैः। संवसन् सन् "प्रियजनमपश्यन्ती पश्यन्ती राक्षसीगणम्" इत्युक्तरीत्या प्रतिकूलसहवासमात्रवान्सन्नित्यर्थः। उच्चैः मुक्तकण्ठं, क्रन्दति रोदिति। "दस्युभिर्मुषितेनैव युक्तमाक्रंदितुं भृशम्" इतिवदिति भावः। तत् तस्माद्धेतोः, कालक्षेपः मदपेक्षितत्वदनुभजनसंकल्पनकालविलम्बः। ते सर्वस्य सर्वशक्तस्य परमकारुणिकस्य



सिद्धोपायस्य तव कथम् केन हेतुना, युज्यते युक्तो भवति। "आर्तानामाशुफलदा" इत्युक्तेरिति भावः॥ ३५॥

अ०—त्वत्स्वभावपर्यालोचनायां मत्परित्यागोऽनुचित इत्याह—

मू०—कोणैरक्ष्णः कुमनसमिमं निर्मलं कल्पयित्वा।
हातुं दूरे वरवरमुने! हा??? कथं युज्यते ते॥
पाथः पातुं प्रयतनपरःपंकिलं शोधयित्वा।
पंके मुञ्चन् पुनरिदमतः प्राप्नुयादेव किंवा॥ ३६॥

व्या०—कोणैरिति॥हे वरवरमुने! कुमनसं स्वरूपोपायपुरुषार्थेषु अन्यथाज्ञानवन्तं त्याज्योपादेयविवेकरहितञ्च जन्तुं स्वमिति यावत् अक्ष्णः एकतरस्य दिव्यनयनस्य कोणैः अञ्चलैरपाङ्गैरित्यर्थः।निर्मलं कल्पयित्वा निरस्ताऽज्ञानादिदोषं कृत्वा, दूरे विप्रकृष्टदेशे हातुं त्यक्तुं ते आत्मलाभात्परं किञ्चिदन्यन्नास्तीति निश्चयवतस्तव कथं युज्यते केन हेतुना युक्तं भवति। हानं कथं युक्तमिति भावः। हा अस्य शोच्यते पातुम्प्रयतनपरःपानार्थप्रयत्नवान्,प्रेक्षावान् इति शेषः।पंकिलं पंकयुक्तं, "पिच्छादिभ्य इलच्"पाथः पानीयं शोधयित्वा निष्पंकं कृत्वा इदं शोधितपानीयं। पंके कर्दमे। पुनर्मुञ्चन् प्रास्यन्सन्! अतः पुनःकर्दमनिक्षिप्तपानीयाद्धेतोः। किमेव वा प्राप्नुयात् शकि लिङ्। अनवक्लृप्तावेव शब्दः दृष्टान्तालंकारः॥ ३६॥

अ०निपुणनिरूपणे तादृशपरमकारुणिक वरवरमुनिवरोपालम्भो न युक्तः, किन्तु तत्समागमकालो नायात इत्याह।

मू०—कालः किंस्विन्न भवति समं कांक्षितः कांक्षितानां।
यस्मिन्नस्मादनलजलधेरुत्प्लुतस्त्वांनमस्यन् ॥
सिक्तः श्रीमन्! वरवरमुने! शीतलैस्त्वत्कटाक्षै-
र्मुक्तस्तापैरमृतमतुलं गाहते मोदमानः ॥ ३७ ॥

व्या०—काल इति ॥ हे श्रीमन्! आर्तार्तिहरणौपयिकसौम्यत्व-शीतलत्वादिगुणप्रशस्तशोभानिधे वरवरमुने! यस्मिन्काले अयञ्जनः अस्मात् वाचामगोचरान्मायाधिष्ठितात् अनलजलधेः त्वद्विप्रकृष्टदेशात्मकानलजलधेः निगीर्याध्यवसायाद्रूपकातिशयोक्तिः। "वरं हुतवह ज्वाला" इत्यादिकमनुसन्धेयम्। लौकिकानां हि सप्तैव समुद्राः अस्य त्वष्टमोऽपि वह्निसमुद्रः कश्चनेति गम्यते। तदिदमात्यतिशय्यप्रयुक्तं उत्प्लुतस्सन् अतिशयितप्लुतगमनवान्सन् प्लुवनं नाम पदन्यासं विना वियति वेगवशात् पतनं त्वां श्रीरंगनिलयं भवन्तं नमस्यन् प्रणमन् शीतलैः वात्सल्य[1]सौ[2]शील्यकारुण्यप्रकाशकतया सुधालहरिवत्सौम्यैः त्वत्कटाक्षैः प्राप्तशेषिभवदीयैः कटाक्षैः सिक्तस्सन् अनलजलधिमज्जनप्रयुक्तवह्निनिर्वाणौपयिकार्द्रीभाववान्सन् सेचनमार्द्रीभाव इत्युक्तम्। शीतलैः कटाक्षैस्सिक्त इति साभिप्रायविशेषणरूपपरिकरः तापैः तापत्रयेणाऽपि मुक्तस्सन् रहितस्सन्नित्यर्थः। मोदमानः आनन्दशीलस्सन् अतुलममृतं निस्समाभ्यधिकसुधां गाहते तस्मिन्मग्नो भवति। अत्र कैङ्कर्यजनितानन्दातिरेकलाभस्य निगीर्याध्यवसायाद्रूपकातिशयोक्तिः। "एष ब्रह्म प्रविष्टोऽस्मि ग्रीष्मे शीतमिव ह्रदम्" "आनन्दसान्द्रममृतप्लवनादिवाभूत्" इत्यादि द्रष्टव्यम्। सः तथाविधः कांक्षितानाङ्कांक्षितः अभिलषितसकलवस्तूनाम्मध्ये तद्व्यावृत्ताभिलाषाविषयः कालः मे स्वं किन्न भवति मन्निरूपितस्वत्ववान् किमर्थन्न भवति; स्वीयः किमर्थन्न भवतीत्यर्थः। तस्य स्वीयत्वे सति तत्प्रतीक्षणं न कार्यमिति भावः। सामान्ये नपुंसकम्। 'किंस्वित्' इति पाठे किंस्वित्कुतो वा न भवति न जायते ॥ ३७ ॥

1 वात्सल्यम् दोषेष्वपि गुणत्वबुद्धिः यथा मातुर्वत्सः। 2 सौशील्यम् महतो मन्दैस्सहनीरन्ध्रेण संश्लेषस्वभावत्वम्।



अ०—अनलजलधेरुत्प्लुत इत्युक्तोत्प्लवनक्रियान्वयसिद्ध्यर्थं तत्समर्थतापत्तिमपेक्षते—

मू०—पारावारप्लवनचतुरः कुञ्जरो वानराणां।
पद्माभर्तुः प्रियसहचरः पत्रिणामीश्वरो वा ॥
वायुर्भूत्वा सपदि यदि वा मार्गमुल्लङ्घ्य दुर्गं।
कालेकाले वरवरमुने! कामये वीक्षितुं त्वाम्॥३८॥

व्या०—पारावारेति ॥ हे वरवरमुने! अहं अनलजलधौ मग्नोऽहं पारावारस्य समुद्रस्य प्लवने लङ्घने चतुरो निपुणः वानराणाङ्कुञ्जरः कपिश्रेष्ठो हनूमानित्यर्थः। गरुडवायुसाहचर्यात् "अन्यत्र गरुडाद्वायोरन्यत्र च हनूमतः" इति हि पठितं पद्माभर्तुः श्रियःपत्युः प्रियसहचरः इदं च मध्यममणिन्यायेन पूर्वोत्तराभ्यामन्वेति। "एष सर्वस्वभूतस्तु परिष्वंगो हनूमतः" इत्यादिना तस्याऽपि तथात्वावगमात्। गरुडस्य च तथात्वं "दासस्सखा वाहनम्" इत्याद्युक्तम्। पत्त्रिणाम् वेगस्वभावानां पक्षिणाम् ईश्वरो वा गरुडो वा वायुर्वा पूर्वोक्तयोरपि वेगातिशयप्रयोजको वायुर्वा भूत्वा यदि वा अथवा। पूर्वोक्तकल्पाभाव

इति यावत् । सपदि एकक्षणे अत्राऽतिशयितवेगवतामपि हनूमत्प्रभृतीनां तादात्म्ये अंततो यत्किञ्चित्क्रमप्राप्तिरवर्जनीयेति यदि वेति कल्पान्तरमाश्रितम् । तदिदं प्राप्यत्वरातिशयकार्यम् । अत एव हि चरमस्वरूपविरुद्धमपि पद्मभर्तुः प्रियसहचरयोस्तादात्म्यमतथाभतस्याऽपि वायोश्च तादात्म्यमपेक्षितम् । दुर्गे दुर्गमे कर्मण एवाधिकरणविवक्षया "सुदुरोरधिकरणे" इति डप्रत्ययः। मार्गमुल्लंघ्य अतिशयेन लंघित्वा । कालेकाले क्षणेक्षणे त्वां निरतिशयभोग्यं त्वां वीक्षितुं चक्षुर्भ्यां द्रष्टुं कामये इच्छामि ॥ ३८ ॥

अ०-विरोधिभूयिष्ठे देशे गुणज्ञानेन धारणमपि दुश्शकमित्याह-

मू०-कामक्रोधक्षुभितहृदयाः कारणं वर्जयित्वा
मर्त्यौपम्यं वरवरमुने ! ये पुनर्मन्वते ते ॥
दुष्टं तेषामभिमततया दुर्वसं देशमृच्छ-
न्नन्तःस्वान्तं कथमपि मिथो भावयेयं भवन्तम्॥३९॥

व्या०-कामक्रोधेति ॥ हे वरवरमुने ! कारणं वर्जयित्वा निमित्तं विनापि कामेन स्वरूपविरुद्धपुरुषार्थस्पृहया क्रोधेन तत्प्रतिबन्धकशंकामूलकमनःप्रज्वलनेन च क्षुभितहृदयाः अप्रकृतिंगतमनस्काः ये दुर्जनाः ते मर्त्यौपम्यम् अयःपिण्डाग्निवत् विष्णोर्विशेषाधिष्ठानयुक्तशेषारब्धविलक्षणजीवस्य तव अतथाभूतमनुष्यसाम्यम् । मन्वते अभिमन्यन्ते तेषां दुर्जनानाम् अभिमततया प्रीतिविषयतया दुष्टं दोषयुक्तम् । अत एव दुर्वसं दुःखेन वस्तुमर्हम् । देशम् ऋच्छन् भजन् अहं त्वां दिदृक्षुरहम् । भवन्तं दर्शनेन विना दुर्लभधारणविषयं त्वाम् अन्तःस्वान्तं हृदि मिथः अन्योन्यं



हृदयसहकारेणेत्यर्थः । कथमपि अतिप्रयासेन भावयेयं निरंतरं स्मृतिविषयं कुर्याम् ॥ ३९ ॥

अ०-इच्छानुगुणं त्वद्विषये प्रवृत्तिविनियोगोऽपि स्वपरदोषैः प्रतिबद्ध इत्याह-

मू०-नामैतत्ते नवनवरसं नाथ ! संकीर्त्य नृत्य-
न्नन्तःकर्तुं वरवरमुने ! नित्यमिच्छत्ययं त्वाम् ॥
अर्द्धं निद्रा हरति दिवसस्याऽर्द्धमन्यन्नृशंसो ।
वासो मूढैर्मलिनमतिभिर्वाक्प्रवृत्तिं निरुन्धे ॥ ४० ॥

व्या०-नामेति ॥ हे वरवरमुने ! अयं जनः एतत् सम्बुद्ध्यन्तं बुद्धिस्थम् । नवनवरसं नवात् नूतनादपि नवे रसे माधुर्यलक्षणे यस्मिन् तथोक्तं प्रतिक्षणं प्रत्यग्ररसमित्यर्थः ते माधुर्या भावेऽपि जपितव्यनामवतस्तव "गुरोर्नाम सदा जपेत्" इत्युक्तेः । नाम दिव्याभिधानम् संकीर्त्य "विसृज्य लज्जां योऽधीते" इत्यादिरीत्या कीर्तयित्वा नृत्यन् तत्कीर्तनजनिताऽनन्दपारवश्येन गात्राणि विक्षिपन्सन् त्वां निरतिशयभोग्यं भवन्तं नित्यं नियमेन अन्तःकर्तुम् आध्यातुम् इच्छति । इच्छानुगुणप्रवृत्तौ का प्रतिहतिरित्यत्राह-नाथेति । नाथ स्वामिन् ! दिवसस्य जीवनकालस्य अर्द्धं समांशम् निद्रा तमोगुणवशात्सर्वेन्द्रियव्यापाराविरतिप्रयोजकसुषुप्तिः हरति गमयति । अन्यत् निद्रातिरिक्तमाहारादिकं दिवसस्याऽर्द्धं हरति गमयति नृशंसः परमक्रूरः मलिनमतिभिः अन्यथाज्ञानवद्भिः मूढैः ज्ञानशून्यैश्च जनैः वासःसहस्थितिः वाक्प्रवृत्तिं वागिन्द्रियव्यापारं निरुन्धे प्रतिहन्ति । अर्द्धं निद्रा हरतीत्यनेन

स्वदोषैर्ज्ञानप्रतिबन्धः वासो मूढैः इत्यनेन परदोषैर्नामसंकीर्तनप्रतिबन्ध इति विवेकः ॥ ४० ॥

अ०—"अनिद्रस्सततं रामः" "सुप्तोऽपि च" इतिवत् कथं-कथञ्चित्तव ध्यानेन सुख्यन्नप्यहं तद्रहितपरनर्थदर्शनेन क्षुभ्यामीत्याह—

मू०—अन्तर्ध्यायन्वरवरमुने ! यद्यपि त्वामजस्रं ।
विश्वं तापैस्त्रिभिरभिहतं वीक्ष्य मुह्याम्यसह्यम् ॥
क्षुत्सम्पातक्षुभितमनसां को हि मध्ये बहूनां ।
एकस्स्वादु स्वयमनुभवन्नेति चेतःप्रसादम् ॥ ४१ ॥

व्या०—अन्तर्ध्यायन्निति ॥ हे वरवरमुने ! अहं त्वां परमभोग्यं त्वाम् अजस्रं सततम् अन्तर्हृदि ध्यायन् अपि स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रियस्मृतिविषयं कुर्वन्नपि यद्यपीति शब्दः अपिशब्दार्थकः।त्रिभिस्तापैःआध्यात्मिकादितापत्रयेण अभिहतम् अभितो हिंसितम् असह्यं दुस्सहं विश्वं प्रपञ्चं वीक्ष्य मुह्यामि मूर्च्छामि। कः पुरुषः एकस्सन् क्षुत्सम्पातेन धारावाहिकक्षुधा क्षुभितमनसाम् अप्रकृतिंगतहृदयाणाम् "क्षुभ सञ्चलने"। सञ्चलनं नाम प्रकृतिविपर्यास इत्युक्तम् । बहूनां मध्ये स्वादुरस्यव स्तुस्वयं स्वेन अनुभवन्सन् चेतःप्रसादं मनस अक्षोभम् एति भजति न कोऽपीत्यर्थः "एकः स्वादु न भुञ्जीत" इत्युक्तेरिति भावः ॥ ४१ ॥

अ०—परानर्थदर्शने सति हि पूर्वोक्तमूर्च्छा भवति तदेव मा भूदिति प्रार्थयते—



मू०—सत्त्वोदग्रैस्सकलभुवनश्लाघनीयैश्चरित्रै-
स्त्रैयन्तार्थप्रकटनपरैः सारगर्भैर्वचोभिः ॥
लोकोत्तीर्णं वरवरमुने लोकसामान्यदृष्ट्या ।
जानानस्त्वां कथमपि न मे जायतामक्षिगम्यः ॥४२॥

व्या०—सत्त्वोदग्रैरिति ॥ हे वरवरमुने ! सत्त्वेन मोक्षहेतुज्ञानप्रयोजकभगवदेकनियतसत्त्वाख्यगुणविशेषेण उदग्रैः प्रचुरैः । इदञ्च व्यधिकरणसजातीयाल्पत्वापेक्षम् । सकलभुवनश्लाघनीयैः अखिलजनश्लाघनार्हैः क्वचित् श्लाघनाभावस्तु कर्तृगुणाभावप्रयुक्तः न तु विषयप्रयुक्त इति भावः । चारित्रैर्वृत्तैः बहुवचनेन "तेजीयसां न दोषाय"इति समाधानं नापेक्षितमेव । एकतरस्यापि वित्तस्योल्लेखत्वाभावादिति सूच्यते । त्र्य्यन्तार्थप्रकटनपरैः ऋग्यजुस्सामात्मकवेदान्तार्थप्रकटनेच्छया प्रयुक्तैः । सारगर्भैः चरमस्वरूपोपायोपेयात्मकत्र्य्यन्तसारार्थः गर्भे येषां तथोक्तैः वचोभिः श्रीसूक्तिभिः चकाराभावः परस्परनैरपेक्ष्यद्योतकः लोकोत्तीर्णं पूर्वोक्तहेतुभिस्सकललोकविलक्षणं त्वां भवन्तं लोकसामान्यदृष्ट्या समानस्य भावः सामान्यं, लोकसजातीयत्वप्रकारकज्ञानेन, जानानः विषयीकुर्वन्, नरपशुरिति शेषः मे अक्षिगम्यः परानर्थदर्शनजन्यदुःखस्वभावस्य मम दृष्टिविषयः कथमपि सर्वात्मनाऽपि न जायतां माभूत् ॥ ४२ ॥

अ०—इत्थं गुणज्ञानेन धारणं कथमपि शक्यमित्युक्तम् अथ तत एव हेतोस्समागमसंकल्पविलम्बस्स्यादित्याशंक्य पुनरपि समागमापेक्षां दर्शयति—

मू०—कल्याणैकप्रवणमनसं कल्मषोपप्लुतानां ।
क्षान्तिस्थैमद्रढिमसमताशीलवात्सल्यसिन्धो ॥

त्वामेवाऽयं वरवरमुने ! चिन्तयन्नीप्सति त्वा—
मार्तं श्रीमन् ! कृपणमपि मामर्हसि त्रातुमेव ॥ ४३ ॥

व्या०—कल्याणैकेति ॥ हे श्रीमन् श्रीवैष्णवनिधे कृपणरक्षणौपयिकसम्पन्निधे वा क्षान्तीत्यादि क्षान्तिः शिक्षणक्षमेष्वागस्सहत्वं स्थेम स्थिरत्वं तच्चेह परतन्त्रशेषित्वप्रयुक्तं स्थिरतमचेतनसंरक्षणसंकल्पवत्वं द्रढिमा दृढत्वं प्रणतप्राणिजातरक्षणभरणधारणसामर्थ्यम् "दृढः स्थूलबलयोः" इत्युक्तेः। बलं द्रढिमा तच्च धारणसामर्थ्यम्।समता आश्रितेष्वविशेषेण वर्तनं शीलं महतो मन्दैस्सह नीरन्ध्रेण संश्लेषस्वभाववत्वं वात्सल्यं दोषभोग्यत्वं क्षान्तिरिति स्वस्वीयविषयकपारिभवादिसहत्वं वात्सल्यं तु अनादिकालानुवृत्ताऽकृत्यकरणादिदोषभोग्यत्वं सिन्धो अक्षीणस्थानभूत अत्र च यथा परत्वे ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि इति । यथा वा विभवे "आनृशंस्यमनुक्रोशः श्रुतं शीलं दमश्शमः । षदगुणाश्शोभयन्त्येनं राघवं पुरुषर्षभम्" इति। तथाऽऽचार्यत्वेऽपि षड्गुणाः क्षान्त्यादयः प्रधानभूता इति षट्सु विश्रान्तिरादिशब्दाऽप्रयोगः । इमे चाऽ[1]श्रयणसौकर्यापादकाः समतया प्राप्तिपूर्त्योऽपि लाभः।अयं जनः कल्मषोपप्लुतानाम् अनादिकालानुवृत्ताऽविद्यादिदोषपीडितानां जनानां विषये शेषे षष्ठीयं कल्याणे परमनिःश्रेयसे एकस्मिन्न तु पापानुगुणफलदानेपीति भावः । प्रवणं आसक्तं मनः यस्य तथोक्तम् "एके मुख्यान्यकेवलाः" इति कोशः । केवल-

[1] टि० आश्रयणसौकर्यापादकाः आश्रयणे शरणवरणे सौकरस्य सुकरत्वस्य आपादकाः ज्ञापका इत्यर्थः "आश्रयणोपयोगित्वञ्चाक्षुषपूर्वकाश्रयणे निग्रहापादकत्वान्यतरबुद्धिनिवर्तनद्वाराश्रयणप्रवृत्त्यौपयिकज्ञानविषयत्वम्" इति पूर्वैरुक्तं निर्वचनमनुसन्धेयम् ।



कल्याणनिरतहृदयमित्यर्थः अत्र "भूतानामेव चरितं दुःखाय च सुखाय च।सुखायैव तु भूतानां त्वादृशामच्युतात्मनाम्" इति भगवान् बन्धमोक्षसाधारणः आचार्यस्तु मोक्षैकान्त इत्यादि सूच्यते । प्रवणपदेन कल्मषपदेन च प्रपीडितप्राणिजातदुर्गतिदर्शनेन स्वयमेव तान्प्रार्थयित्वा तेभ्यः कल्याणं प्रयच्छतीति व्यज्यते । "वन सम्भक्तौ" सम्भक्तिः प्रार्थना इत्युक्तम् । त्वाम् आचार्यादित्र्यात्मकत्वेन परमभोग्यं भवन्तम् । एवकारेण पर्वान्तरव्यावृत्तिः । चिन्तयन् अविरतं ध्यायन्सन् "स्वप्नेऽपि यद्यहं वीरं राघवं सहलक्ष्मणम् । पश्येयं नावसीदेयम्" इत्यादिरीत्या सर्वदा प्रार्थयानस्सन्नित्यर्थः ईप्सति आप्तुमिच्छति गुणज्ञानमपर्याप्तमित्यर्थः । अत्र चिन्तयन् इति शतृत्वहेतुत्वमीप्सांप्रति इष्टज्ञानस्य इच्छाहेतुत्वात् । यद्यपि "विविदिषन्ति" इत्यत्र यज्ञादेर्वेदनहेतुत्वमश्वेन जिगिमिषतीत्यादिवत् इति सिद्धान्तः । तथाऽपि सिद्धोपायनिष्ठस्य साधनान्तरशून्यत्वात् न चिन्तनस्याऽऽप्तिहेतुत्वमिति । तदेतदाह, कृपणम् इति। कृपणम् उपायान्तरप्रवृत्त्यनर्हस्वभावम् । "कार्पण्येनाप्युपायानां विनिवृत्तिरिहेष्यते" इत्युक्तेः । आर्तं त्वद्विश्लेषप्रकृष्टदेशस्थितिरूपदुःखातिरेकयुक्तं मामपि मां च अनेन बहवो वरवरमुनिभिः पालिता इति गम्यते । त्रातुमेवार्हसि विग्रहदर्शनेन रक्षितुमेव योग्योऽसि न तु त्वत्स्वभावपर्यालोचनायामेव गुणज्ञानमात्रसंकल्पनेन मत्परित्यागार्ह इत्यर्थः । "परित्राणाय साधूनाम्" इत्यत्रैव त्राणमिह विवक्षितमित्यर्थलाभः । इदंच द्वयानुसारी श्रीमन् इति तत्र सम्बुद्ध्यन्तमुपात्तम् । तत्र हि योजनांतरे तदपि स्वीकृतं

अत एव "श्रीमन्नारायण स्वामिन्" इत्यादि तद्विवरणं च । अवशिष्टसम्बुद्ध्यंतपदद्वयेन नारायणपदार्थ उक्तः । कल्याणैकप्रवणमनसं त्वां चिंतयन् त्रातुमर्हसीत्यत्र 'शरणं प्रपद्ये' इत्यनयोरर्थ उक्तः । 'त्वामीप्सति' इत्यत्र त्वाम् इत्युत्तरखण्डस्थचतुर्थ्यन्तपदद्वयार्थः । ईप्सतीति आप्लृधातुना चतुर्थ्यर्थः सना अध्याहृतः स्यां शब्दार्थश्चोक्तः । एवकारेण च नमःशब्दार्थ इति ॥ ४३ ॥

अ०—कृपण इत्युक्तं विशदयति—

मू०—दोषैकान्ती दुरितजलधिर्देशिको दुर्मतीनां ।
मूढो जन्तुर्ध्रुवमयमिति श्रीमता मोचनीयः ॥
पादूयुग्मं भवदनुचरैरर्पितं भक्तिनम्रे ।
मौलौ कृत्वा वरवरमुने वर्ततां तत्र धन्यः ॥ ४४ ॥

व्या०—दोषैकान्तीति ॥ हे वरवरमुने ! श्रीमता "पापानां वा शुभानां वा वधार्हाणां प्लवंगम । कार्यं कारुणमार्येण न कश्चिन्नापराध्यति" इत्युक्तगुणविशेषवशात् श्रियोऽधिष्ठानयुक्तेन त्वया अयं जन्तुः दोषाणाम् अकृत्यकरणादीनाम् एकान्तः नैयत्यमस्याऽस्तीति दोषैकान्ती दुरितानां जन्मान्तरकृतपापानां जलधिः मुख्यसमुद्रः दुर्मतीनाम् अन्यथाज्ञानविपरीतज्ञानवतां देशिकः गुरुः मूढः ज्ञानशून्यश्चेति हेतुना मोचनीयः दोषादिभ्यो मोक्षयितव्य इत्यर्थः । ईप्सतीत्युक्तं पादूयुग्मम् इत्यादिना बहुभिश्च श्लोकैर्विवृणोति तत्र हि आप्तिः प्राप्तिः सा च परिचर्याजनितप्रीतिविशिष्टवरवरमुनिरूपप्राप्यसम्बन्धानुकूलव्यापारभूतसर्वविधकैंकर्यरूपा। भवतः परमकारु-

१ स्यामिति क्रियापदस्यार्थः ।



णिकस्य तव अनुचरैः "अनुसञ्चरन् छायावा" इत्युक्तपारतन्त्र्यसारैर्महानुभावैः अर्पितं "तुल्यो भवतु चास्माभिः" इतिवत् परसमृद्ध्यैकप्रयोजनवशात्प्रापितं; पादूयुग्मं दिव्यपादुकायुगलं भक्तिनम्रे प्रीतिप्रकर्षप्रह्वीभूते मौलौ शिरसि कृत्वा धन्यस्सन् "धनम्मदीयन्तव पादपंकजम्" इत्युक्तरीत्या पादुकात्मकनिरतिशयधनलाभवान्, वरदनारायणगुरुवररूपत्वेन "गुरुरेव परं धनम्" इत्युक्तधनलाभवान्सन्; तत्र भवदन्तिके वर्तताम् आत्मयात्रारूपवृत्तिं लभताम् । पादूशब्दः ऊदन्तत्वाद्दीर्घान्तः । " वरवरमुनिवर्यपादुरत्नं " इति तु "इको ह्रस्वो ऽङ्यो गालवस्य" इति ह्रस्वेन साधु ॥ ४४ ॥

अ०—अथ नित्यं 'निद्राविगमसमये' इत्यादिसप्तश्लोक्या प्रबोधप्रभृति संवेशपर्यन्तासु नित्यदिव्यचर्यासु मध्ये कासुचित्प्रधानभूतासु स्वोपयोगमाशंसते—

मू०—नित्यं निद्राविगमसमये निर्विशङ्कैरनेकै-
स्त्वन्नामैव श्रुतिसुमधुरं गीयमानं त्वदीयैः ॥
प्रायस्तेषां प्रपदनपरो निर्भरस्त्वत्प्रियाणां ।
पादाम्भोजे वरवरमुने ! पातुमिच्छाम्यहं ते ॥ ४५ ॥

व्या०—नित्यमिति ॥ हे वरवरमुने ! अहं निर्विशंकैः स्वरूपविरुद्धपुरुषार्थादिविषयविविधसंशयरहितैः । अनेकैः त्वदीयैः कर्तृभिः। ते निद्राविगमसमये तव प्रबोधकाले; गीयमानं रञ्जकस्वरसम्बन्धयुक्तं क्रियमाणं श्रुतिसुमधुरं गानाभावेऽपि मधुरं 'सु' इति भगवन्नामव्यावृत्तिः; त्वन्नामैव त्वदीयदिव्याभिधानमेव; इदं पातुमित्यत्रान्वेति तेषां नाम गायताम्; त्वत्प्रियाणां त्वद्विषयकप्रीतिप्रकर्षवताम्; पादा-

म्भोजे प्रायः अधिकं, प्रपदनपरस्सन् त्वदीयदिव्यनामगानरूपकृतज्ञतया पतन्सन्; निर्भरश्च सन् पातुमिच्छामि पेयसम्पादनरूपभररहितस्सन् पिपासामीत्यर्थः ॥ ४५ ॥

अ०—प्रबोधोपलक्षितसर्वपौर्वाह्णिकानुष्ठानानन्तरं तत्त्वप्रवचनार्थं दिव्यसंसदवस्थानदशायां स्वोपयोगमाशंसते—

मू०—अन्तःस्वान्तं कमपि मधुरं मन्त्रमावर्तयन्ती—
मुद्यद्बाष्पस्तिमितनयनामुज्झिताशेषवृत्तिम् ॥
व्याख्यागर्भं वरवरमुने ! त्वन्मुखं वीक्षमाणां ।
कोणे लीनः क्वचिदणुरसौ संसदं तामुपास्ताम् ॥४६॥

व्या०—अन्त इति ॥ हे वरवरमुने ! व्याख्यागर्भं "पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्" [पाराशरपु० १८—१८]इत्युक्तलक्षणलक्षितवेदान्तद्वयव्याख्यानं गर्भं यस्य तथोक्तं; त्वन्मुखं वीक्षमाणां विशेषतः पश्यन्तीम्; अत एव अन्तःस्वान्तं हृदयमध्ये; मधुरं रस्यं कमपि लोकविलक्षणं मन्त्रं जितं जयेत्याद्यर्थकभगवद्विषयमन्त्रम् आवर्तयन्तीं प्रत्यर्थं श्रवणं भग्नाभिमानतया सन्ततं चिन्तयन्तीम् उद्यद्बाष्पेण सदोदितानन्दाऽश्रुणा स्तिमितनयन। शीतलनेत्रां स्तब्धनेत्रां वा "स्तिमि आर्द्रीभावे"उज्झिताऽशेषवृत्तिम् आसारप्रसारादिसर्वचेष्टाविस्मृतिकर्त्रीम्, तां प्रसिद्धाम्; संसदं श्रियः प्रभृतिसमग्रपुरुषप्रकाण्डाधिष्ठितां दिव्यसभाम्, असौ अणुः बुद्धिस्थमात्रोऽल्पकः क्वचित् कोणे कुत्रचित् अग्रदेशे लीनस्सन् श्लिष्टस्सन् अदृष्टस्सन्वा । तां संसदमुपास्तां समीपदेशे तिष्ठतु ॥ ४६ ॥



अ०—तत्रैव वरवरमुनिवरश्रीचरणनलिनोपसंग्रहणपूर्वकतत्पादुकाऽऽभरणादीनां सतां प्रेक्षणीय इत्यनेन तीर्थेन तद्विषये स्वोपयोगमाशंसते—

मू०—आबिभ्राणश्चरणयुगलीमर्पितां त्वत्प्रसादा—
द्वारंवारं वरवरमुने ! वन्दमानेन मूर्ध्ना ॥
शृण्वन्वाचः श्रुतिशतशिरस्तत्त्वसञ्जीविनीस्ते ।
पश्यन्मूर्तिं परिषदि सतां प्रेक्षणीयो भवेयम् ॥ ४७ ॥

व्या०—आबिभ्राण इति ॥ हे वरवरमुने ! अहं परिषदि त्वदीयदिव्यसभायाम्, त्वत्प्रसादात् मदनुवृत्त्या विना केवलत्वदधीनप्रसादाद्धेतोः, अर्पितां दत्तां ते चरणयुगलीं श्रीपादद्वयं वन्दमानेन नमस्यता मूर्ध्ना, वारंवारं पौनःपुन्येन आबिभ्राणस्सन् आभरणत्वेन धारयन्सन् "मदीयमूर्धानमलङ्करिष्यति"इतिवत् । आङ्पूर्वको बिभर्त्तिः अलंकारत्वेन धारणे वर्तते । अत एव हि आभरणशब्दः । शतानां शिरसां समाहारः शतशिरः श्रुतीनां शतशिरसां श्रुतिशतशिरः तस्य तत्त्वं तत्प्रतिपाद्यः परमात्मा तस्य सञ्जीवनीः तत्प्राणनहेतुभूताः कुदृष्टिपरिगृहीतानां वेदन्तानां यथावदर्थप्रतिपादकाः ते वाचः शृण्वन्सन् त्वदीयश्रीसूक्तीः श्रवणविषयीकुर्वन्सन् "संश्रवे मधुरं वाक्यम्" इत्यर्थपर्यालोचनेन विनापि स्वरूपेण तासां भोग्यत्वं व्यज्यते । ते मूर्तिं पश्यन् त्वदीयदिव्यमंगलविग्रहं चक्षुषा सेवमानस्सन्, सत्तां स्वरूपज्ञानेन लब्धसत्ताकानां प्रेक्षणीयः दर्शनीयो भवेयम् ॥ ४७ ॥

अ०—रंगनाथमंगलाशासनार्थमागमनसमये स्वोपयोगमाशंसते—

मू०—काले यस्मिन्कमलनयनं देवमालोकयिष्य-
न्निर्यासि त्वं वरवरमुने ! नित्ययुक्तैस्त्वदीयैः ॥
अग्रे नृत्यन्नयमपि तदा गाहतां हर्षसिन्धौ ।
मज्जन्मज्जन्मधुवनजुषां वैभवं यूथपानाम् ॥ ४८ ॥

व्या०—काल इति ॥ हे वरवरमुने ! यस्मिन्काले त्वं शेषिविषयमङ्गलाशासनरूपसाक्षात्फलैकपरस्त्वं नित्ययुक्तैः त्वामेवोपायमुपेयञ्च श्रद्दधानैः त्वदीयैः त्वदेकनिरूपणीयैः सद्भिः सहार्थे तृतीया । अनया तेषामप्राधान्यावगमात् रङ्गनाथमङ्गलाशासनार्थं वरवरमुनिवरगमनसमये तन्मङ्गलाशासनपरत्वं तेषां व्यज्यते । कमलनयनं पुण्डरीकाक्षम् इदमेव नेत्रसौभाग्यम् । "स्नेहादस्थानरक्षाव्यसनिभिः" मंगलाशासनहेतुः । देवं प्राप्तशेषिणम् इदञ्च तस्य स्वरूपानुरूपत्वोपपादकम् आलोकयिष्यन्सन् आपादान्मौलिपर्यन्तं मंगलाशासनार्थं द्रक्ष्यन्सन् अत्राऽऽलोकयिष्यन् इति दर्शनफलस्य कर्तृगामित्वबोधकस्य "णिचश्च" इत्यात्मनेपदस्याऽनुक्तेरालोकनस्य परार्थत्वमिति मंगलाशासनार्थत्ववाचोयुक्तिः । निर्यासि परिषद इति शेषः । तदा तस्मिन् प्रथमपरिस्पन्दप्रभृतिगमनकाले अयं जनोपि हर्षसिन्धौ आनन्दाब्धौ मज्जंमज्जं णमुलन्तोऽयं शब्दः पौनःपुन्यं द्विरुक्त्यर्थः नृत्यन् सन् गात्रविक्षेपं कुर्वन्सन् मधुवनजुषां सुग्रीवपालितमधुवनाख्यक्रीडोद्यानं प्राप्तानां तस्मिन् प्रीयमाणानां वा यूथपानाम् अंगदप्रभृतीनां सेनानाथानां । वैभवं



आनन्दसमृद्धिम्, गाहतां उन्मस्तकं प्राप्नुयात् तत्र गाहनं हि तस्मिन्नुन्मस्तकप्रवेशः ॥ ४८ ॥

अ०—तस्मिन्नेव काले वरवरमुनिवरमभितो मंगलाशासनविधया स्वोपयोगमाशंसते—

मू०—भूत्वा पश्चात्पुनरयमथ व्योम्नि गोपायमानो ।
भूयः पार्श्वद्वितयसुषमासागरं गाहमानः ॥
जल्पन्नुच्चैर्जयजय विभो ! जीवजीवेति वाचं ।
शंसन्मार्गं वरवरमुने ! सौविदल्लो भवेयम् ॥ ४९ ॥

व्या०—भूत्वेति ॥ हे वरवरमुने ! अहम् अथ नर्तनानन्तरम् पश्चात् पृष्ठतः व्योम्नि ऊर्ध्वम्, पुनर्भूत्वा अनुपदं स्थित्वा, पार्श्वद्वितयसुषमासागरं सव्येतरभागद्वयसौन्दर्यसमुद्रम्, गाहमानस्सन् तस्मिन्मग्नस्सन्, अनिष्टानि निवारयन्सन् विभो सर्वदेशसर्वकालव्यापिन् । जयजय सर्वत्र सर्वदा सर्वोत्कृष्टो भूयाः जीवजीव सर्वत्र सर्वदाऽनामयो भूयाः इति वाचमुच्चैर्जल्पन् सन् मार्गम् इत इतो देवेति शंसन्सन् सौविदल्लः कञ्चुकी भवेयं भवितुमाशासे ॥४९॥

अ०—अथ तत्र सेवाक्रमेण गोदाप्रभृतीन्सेवमानस्य वरवरमुनिवरस्य श्रीपादयुग्मं "रममाणा वने त्रयः" इत्यत्र लक्ष्मणरमणवत्सेवितुं प्रार्थयामीत्याह, तत्र हि शेषिदम्पतिमिथस्संश्लेषरसदर्शनजन्यानन्दो लक्ष्मणस्य रमणमित्युक्तम् ।

मू०—देवी गोदा यतिपतिशठद्वेषिणौ रंगशृंगं ।
सेनानाथो विहगवृषभः श्रीनिधिरसिन्धुकन्या ॥

भूमानीलागुरुजनवृतः पूरुषश्चेत्यमीषा-
मग्रे नित्यं वरवरमुनेरंघ्रियुग्मं प्रपद्ये ॥ ५० ॥

व्या०—इदञ्चाऽस्मदाचार्याणां श्रीरङ्गधामनि सेवाक्रमाभिप्रायकमिति। अमीषां पूर्वोक्तगोदादिपूरुषपर्यन्तानाम् अग्रे पुरतः,नित्यं नियतम्, वरवरमुनेरङ्घ्रियुग्मं श्रीपादयुगलं प्रपद्ये प्रार्थयामीत्यर्थः । प्रपूर्वकपत्लृधातोः प्रार्थनावाचित्वं दीपकृद्भिरभिहितम् अत एव प्रपत्तिर्विश्वासः स च सकृत्प्रार्थनामात्रेणाऽपेक्षितं दास्यतीति विश्वासपूर्वकप्रार्थनमिति यावत् इति सम्प्रदायावगतमिति भगवद्भाष्यकारसूक्तिश्च ॥ ५० ॥

अ०—अथ 'सायन्तनं ततः कृत्वा' इत्युक्तदिव्यचर्यानन्तरभाविसंवेशविषये स्वोपयोगमाशंसते—

मू०—भृत्यैर्द्वित्रैः प्रियहितपरैरञ्चिते भद्रपीठे ।
तुङ्गं तूलासनवरमलंकुर्वतस्सोपधानम् ॥
अङ्घ्रिद्वन्द्वं वरवरमुनेरब्जपत्राऽभिताम्रं ।
मौलौ वक्रे भुजशिरसि मे वक्षसि स्यात्क्रमेण ॥५१॥

व्या०—भृत्यैरिति ॥ प्रियं यत् हितं तत्परैः; प्रियत्वं तादात्विकप्रीतिप्रयोजकत्वं हितत्वं पथ्यत्वम्; अनयोश्च प्रायेण सहानवस्थानलक्षणविरोध एव । क्वचित्तु दुर्लभः समागमः तादृशप्रियत्वे सति हितम्भूयशः परीक्ष्य लब्धतद्विषयकासक्तिमद्भिरिति भावः । तादृशा अपि दुर्लभा इत्याह-द्वित्रैः इति।द्वौ वा त्रयो वेति विकल्पनीयैरित्यर्थः । तद्विषये चतुष्ट्वादिकं तु नास्त्येवेति भावः । भृत्यैः दासैः



ते च पादु[1]रत्नपादरेखामयप्रभृतयः । अञ्चिते अञ्चनेन पूजया निष्पादिते; यथा हि इष्टदेवताद्याराधनमत्यन्तसावधानैर्निष्पाद्यं तद्वन्निष्पादित इत्यर्थः । अत एवाऽलोपाऽभाव इडागमश्च । गत्यर्थत्वे तु उदक्तमुदकं कूपात् इत्युदाहृतं भद्रपीठे भद्रं मंगलं तदेकहेतुः पीठो भद्रपीठः तस्मिन्; अब्भक्षवत्, अनेन महामतीनाम्भीत्यवलम्बनाऽभावस्सूच्यते । तुंगम् उन्नतं सौकुमार्यभूयस्त्वास्पदं सोपधानं तूलापाश्रयसहितं तूलासनवरं तूलनिर्मिताऽऽसनश्रेष्ठं शय्येत्यनुक्ते लौकिकत्वस्वापाभावो लभ्यते । तत् अलंकुर्वतः भूषयतः अनेनाऽनन्यप्रयोजनभृत्यकृषिसाफल्यार्थं तत्राऽवस्थानं न स्वार्थमिति सूच्यते । भूषणं हि न स्वार्थम् अपि तु द्रष्टॄणां । शत्रादेशतोऽप्ययमर्थो व्यज्यते । न ह्यलंकरणफलं कर्तृगामीति सूचयति । अन्यथाऽलङ्कुर्वाणस्येत्येव वदेत्। किञ्च-शोभाकरस्यैवालंकारत्वमिति "श्रीमान् सुखसुप्तः" इत्येतदप्यस्तीति व्यज्यते । उक्तञ्च "काव्यशोभाकरा ये स्युस्तेऽलंकाराः प्रकीर्तिताः" इति । तथाविधस्य वरवरमुनेः अब्जपत्राऽभिताम्रं पुण्डरीकपलाशवदरुणतरम् अङ्घ्रिद्वन्द्वं वरवरमुनिवरश्रीचरणयुगलं मौलौ शिरसि भुजशिरसि अंसयोः वक्षसि उरसि क्रमेण उक्तानुपूर्व्या स्यात् तन्निष्ठं भूयात् । अत्राऽब्जपत्राभिताम्रमंघ्रिद्वन्द्वं मौलाविति उक्तेः पुष्पसदृशत्वात् शिरसि रसपारिमला-

१ पादुरत्नम् वरदनारायणगुरुः, पादरेखा रामानुजमुनिः अनेन भगवद्वरवरमुनेः श्रीपादुका वरदगुरुः एवेति गम्यते रामानुजमुनिस्तु भगवद्रामानुजसन्निहितरामानुजपदच्छायाख्यगोविन्दाचार्यवत् "रम्यजामातृयोगीन्द्रपादरेखामयं सदा" इत्युक्तेः अयमर्थः सदाचार्यादवगन्तव्यः ।

श्यामास्ये,पत्रशब्दप्रयोगेण बहुपत्रगुम्फितमालिकासादृश्यात् अंसयो-र्वक्षसि च मालिकावच्च भूयादिति लभ्यते । भृत्यविषये ह्यलंकर्तृत्व-मुक्तं तद्वदात्मानमप्यलंकरोत्वित्याशयः । पादोपधानं मामंगीकरो-त्वित्याशयः ॥ ५१ ॥

अ०—एवं सप्तश्लोक्यां प्रदिशादितां वरवरमुनिवरदिव्यचर्यामह-रहरनुवृत्तां सूचयन् तत्र स्वोपयोगमाशंसते—

मू०—अग्रे पश्चादुपरि परितो भूतलं पार्श्वतो मे ।
मौलौ वक्त्रे वपुषि सकले मानसाम्भोरुहे च ॥
दर्शंदर्शं वरवरमुने ! दिव्यमंघ्रिद्वयं ते ।
[1]मज्जन्मज्जन्नमृतजलधौ निस्तरेयं भवाब्धिम्॥५२॥

व्या०—अग्र इति॥हे वरवरमुने! अहं मे मम अग्रे पुरतः पश्चात् पृष्ठतः उपरि ऊर्ध्वम् । भूतलं परितः पार्श्वतः पार्श्वद्वये, मौलौ वक्त्रे वपुषि सकले सर्वस्मिन् शरीरे । मानसाम्भोरुहे च हृदयपुण्डरीके च त्वदीयदिव्यचरणयुगं दृष्ट्वा, अमृतजलधौ आनन्दसुधासमुद्रे,नित्यम्मज्जन् पूर्वोक्तप्रकारेणाऽवगाहनं प्रतिदिनम् कुर्वन्, भवाब्धिं निस्तरेयं भवाब्धेरुद्गच्छेयमित्यर्थः । स्वस्य पृष्ठतो गमनदशाऽभिप्रायेण अग्र इत्युक्तम्, पुरोधावनाभिप्रायेण पश्चादित्युक्तम् वहनाद्यभिप्रायेण उपरीत्युक्तम्, "जल्पन्नुच्चैर्जयजय विभो जीवजीव" इत्युक्ताभिप्रायेण पार्श्वत इत्युक्तम्। दिव्यदेशदिव्ययात्राभिप्रायेण परितो भूतलमित्युक्तं

१ 'नित्यंमज्जन्' इति व्याख्याने प्रतीकोपादनात् 'नित्यंमज्जन्'इत्येव पाठः स्वीकृतः व्याख्यात्रेति गम्यते अतो मूलेऽपि तथा पाठ एवाङ्गीकरणीयः पुस्तकद्वयेऽपि 'मज्जन्मज्जन्' इत्येव दृश्यते एवमेव वृद्धाः पठन्ति च. ।



पादोपधानभावाभिप्रायेण मौलौ वक्त्रे वपुषि सकल इत्युक्तं,स्वीयसुषुप्तिकालाभिप्रायेण देशान्तरनियुक्तक्रियानुष्ठानार्थप्रवासाभिप्रायेण वा मानसाम्भोरुह इत्युक्तमिति विभावनीयम् ॥ ५२ ॥

अ०—"कुशस्थले निवसति स च प्रातरिहेष्यति" इति रीत्या भवत्प्राप्तिहेतुभूतमव्यवहितप्रभातं सुप्रभातं संकल्पयस्वेत्याह—

मू०—कर्माधीने वपुषि कुमतिः कल्पयान्नात्मभावं ।
दुःखे मग्नः किमिति सुचिरं दूयते जन्तुरेषः ॥
सर्वं त्यक्त्वा वरवरमुने! सम्प्रति त्वत्प्रसादा—
द्दिव्यं प्राप्तं तव यदयुगं देहि मे सुप्रभातम् ॥५३॥

व्या०—कर्मांधिनि इति॥हे वरवरमुने! संप्रति अद्यैव त्वत्प्रसादात् त्वदीयनिर्हेतुकानुग्रहात्मकहेतुना, मे सर्वं त्यक्त्वा दिव्यं तव पदयुगलं प्राप्तं सुप्रभातं ममाऽविद्याप्रभृतिभगवत्पर्यन्तत्यागपूर्वकचरमपर्वात्मकभवदीयश्रीपादद्वन्द्वप्राप्तिहेतुभूतशोभनप्रभातमङ्गलभूतं त्वद्विप्रकर्षकालराऽव्यवसानात्मकं प्रातःकालं कर्मपदमिदं देहीत्यत्रान्वेति । कर्माधीने कर्मस्थितिनियतास्थितिके, वपुषि शरीरे, आत्मभावम् आत्मत्वं कल्पयन् जानन्, कुमतिः अन्यथाज्ञानवान्, गोबलीवर्दन्यायात् समादानम् अत एव दुःखे मग्नः एष जन्तुः किमर्थं सुचिरं दूयते परितापं भजतीति मत्वा, देहि सुप्रभातं देहीत्यर्थः । अनेनाऽनिद्रस्यैव मनोरथ इति व्यज्यते ॥ ५३ ॥

अ०—अभिनिवेशातिशयेनाऽन्यपरज्ञानादिजनकसामग्र्यधीनजन्मकज्ञानादिकं त्वद्विषयकसंस्मरणादिरूपेण जायतामित्यत्राह—

मू०— या या वृत्तिर्मनसि मम सा जायतां संस्मृतिस्ते ।
यो यो जल्पस्स भवतु विभो ! नामसङ्कीर्तनं ते ॥
या या चेष्टा वपुषि भगवन् ! सा भवेद्वंदनं ते ।
सर्वं भूयाद्वरवरमुने! सम्यगाराधनं ते ॥ ५४ ॥

व्या०—यायेति ॥ तथाऽप्यत्र प्रवृत्तिर्या त्वत्स्मृतेस्सा विनश्यतु इति वरणदशायां मे उत्तरभाविनिषिद्धप्रवृत्तिनिवर्तनप्रार्थनायां तत्सिद्धिवत् निषिद्धप्रवृत्तिजनकसामग्र्या एव प्राप्तविषयप्रार्थनायां तत्सिद्ध्यतीत्याशयमूलिकेयं प्रार्थना, न त्ववश्यं मम बुद्धिपूर्वकनिषिद्धप्रवृत्या भाव्यम्।सा च तव त्वत्संस्मृत्यादिवत् भोग्या भवत्विति विपरीतप्रार्थनाऽत्र विवक्षिता; तथा सति संस्मृत्यादिपदे लक्षणापत्तेः मम तु मृद्घटो भवतीत्यत्रेवात्र मुख्यत्वमेव इदानीमपि प्रातिकूल्यव्यवसायनिवृत्त्यभावेनाऽनधिकारित्वापत्तेः; वरवरमुनिवरविषयकैङ्कर्यप्रार्थनाप्रकरणत्वेन तदन्यबुद्धिपूर्वनिषिद्धप्रवृत्तिप्रार्थनायां प्रकरणविरोधापत्तेः, एतत्कृतविलक्षणमोक्षाधिकारिनिर्णयाख्यग्रंथविरोधापत्तेः,[1] ते संस्मृतिर्जायतामित्यत्र त्वदभिमतं यस्त्वत्संस्मृतिवत् प्रीतिजनकत्वं तद्वज्जायतामित्यर्थस्य वक्तव्यतया चेति शेषे षष्ठीत्वापत्तेश्च मम कृते वन्दनमिति त्वत्कर्मकवन्दनादिकमित्यर्थेन कारकषष्ठीत्वादित्यलम् । हे वरवरमुने मम मनसि "प्रपन्नस्यापिहि" इत्याद्युक्तरीत्या दुर्निवारप्रकृतिसम्बंधस्य मम हृदये, याया प्रीतिर्जायते[2] स्वस्वकारणाधीनं[3] यद्यत् ज्ञानं जायते; अत्र क्रियापेक्षायामुपस्थितजनिधातोरेव विभक्तिविपरिणामेन जायत इति लभ्यते। भवतु भवेत् इत्यत्रापि भवतीति लभ्यते. सा स्वकारणाधीनज्ञानरूपमनोवृत्तिः ते संस्मृतिर्जायतां त्वद्विषयकसंस्मृतिरूपा उत्पद्यताम्; गोमयात् वृश्चिकोत्पत्तिवत वेतृकन्दाद्द्वीपान्तरे कदल्युत्पत्तिवच्च प्रपत्तव्यशक्तिविशेषाद्युज्यत इदमिति भावः । अत्र निषिद्धनिवृत्तिप्रार्थनाया प्राप्तविषयप्रवृत्तिप्रार्थना पृथक्कर्तव्येति स्वकारणवशात् जायमानप्रवृत्तित्वावच्छिन्नस्योत्पत्तिदशायामेव प्राप्तविषयप्रवृत्तित्वेनोत्पत्तिप्रार्थनायां लाघवमिति एवंविधशैली आश्रिता एवं "यद्धिमनसा" इत्युक्तरीत्योक्तम् "तद्वाचा वदति" इत्युक्तरीत्याऽऽह—यो योजल्पो भवति स्वकारणाधीनोयो यश्शब्दः जायते सः स्वकारणाधीनशब्दः, ते नामसङ्कीर्तनं भवतु त्वदीयदिव्यनामधेयसम्यक्कीर्तनरूपमुत्पद्यताम् "तत्कर्मणा करोति" इत्युक्तमाह,वपुषि याया चेष्टा भवति शरीरे स्वस्वकारणाधीना याया स्पन्दादिरूपाक्रिया उत्पद्यते,सा ते वन्दनं भवतु सा स्वकारणाधीनक्रिया, त्वत्कर्मकवन्दनमुत्पाद्यताम्.सर्वम् उक्ताऽनुक्तं समस्तं,तेसम्यक्आराधनं भूयात् त्वदीयनिरतिशयमुखोल्लासप्रयोजकव्यापाररूपमुत्पद्यताम्. उत्पत्तिदशायामेव तथाविधत्वेनोत्पत्तेः न प्रायश्चित्तानुष्ठानक्लेश इति भावः ॥ ५४ ॥

अ०—अथ नमश्शब्दविवक्षिततदीयपर्यन्तकैङ्कर्यं प्रार्थयिष्यन् तद्विषयकतीव्ररुचिसिद्ध्यै तदीयेत्यत्र तत्पदवाच्यवरवरमुनिवरविषये परमभक्तिम् "या प्रीतिरविवेकानाम्" इति रीत्या प्रार्थयते—

मू०—कामावेशः कलुषमनसामिंद्रियार्थेषु योऽसौ ।
भूयो नाथे मम तु शतधा वर्ततामेव भूयान् ॥

[1] अनेन न देवराजगुरुवरेण विलक्षणमोक्षाधिकारिनिर्णयः कृत इति केचिदाहुः ते निरस्तप्रायाः ॥ [2] वृत्तिरिति पा० । [3] करणाधीनेति पा० ।

भूयोऽप्येवं वरवरमुने! पूजनत्वे प्रियाणां ।
भूयोभूयस्तदनुभजने पूर्णकामो भवेयम् ॥ ५५ ॥

व्या०–कामावेश इति ॥ इयश्च चरमाचरमनिष्ठा हे वरवरमुने यः यत्स्वरूपकः यावत्परिणामको वा कलुषमनसां क्षुभितहृदयाणां पुंसाम्; कामस्य कामदेवस्य आवेशः स्वप्रकृतिविस्मरणपूर्वकशरीर–परवशताधिष्ठानविशेषः; विषयानुभवाऽभावव्यतिरेकप्रयोजकस्पृहा परिणाम इति यावत्। अत एव "युवतिजनेषु शनैश्शनैरनङ्गः"इत्युक्तम्। असौ तावत्परिमाणस्तत्स्वरूपः,कामावेशः परमभक्त्यतिशयरूप इति शेषः।मम नाथे स्वरूपानुरूपशेषिणि त्वयि विषये भूयो वर्ततां बहुकृत्वो वर्तताम्, शतधा वर्तताम् अनन्तप्रकारविशिष्टो वर्तताम् । भूयान्वर्ततां विपुलस्वरूपो वर्तताम्; एवं यथा त्वाद्विषये तथैव त्वत्प्रियाणां पूजनविषये भूयः बहुशः पूर्णकामः अपरिच्छिन्नाभिनिवेशवान् भवेयम्; तदनुभजने त्वदीयभजनानुभजने, त्वत्सम्बन्धिसम्बन्धिविषयककैङ्कर्ये भूयोभूयः पूर्णकामो भवेयम् । अत्यर्थापरिच्छिन्नाभिनिवेशातिशयवान् भवितुं प्रार्थयामि ॥ ५५ ॥

अ०–एवं वरवरमुनिवरतत्संबन्धिसम्बन्धिविषयसर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्यहेतुतद्विषयाऽतिमात्राभिनिवेशातिशयः प्रार्थितः । अथ सति सर्वलोकसाक्षिकमस्मिन्नभिनिवेशातिशये तद्बलात्कारितदर्शितकैङ्कर्यकरणानुरोधेन भक्ष्याभक्ष्यभक्षणसेव्यासेव्यसेवनकृत्याऽकृत्यकरणानि लक्ष्मीतन्त्रादिषु[1] अस्याऽधिकारिण-

1 लक्ष्मीतन्त्रे १७ अध्याये यथेष्टं द्रष्टव्यम् ।



स्त्याज्यतयोक्तार्थसाधकानर्थसाधककर्मरूपराशिद्वयान्तर्गतानि प्रसंजन्ति चेदपि नास्ति वैधर्म्यं तेषामभिनिवेशातिशयबलात्कारित्वेन भगवदनभिमतिपुरुषार्थहानिप्रयोजकत्वाऽभावात् अत एव ह्यनन्यदैवत्वविरुद्धप्रवृत्तिदर्शनोक्तिः नाऽप्यत्र लोकापवादभीतिकरुणाक्षोभाप्रतिबंधकाः, तेषामुक्तातिमात्राभिनिवेशातिशयेन प्रतिबंधात्. "अत्यंतभक्तियुक्तानां नैव शास्त्रं न च क्रमः"इति वचनेन तदधिकारिविषये तादृशाभिनिवेशप्रतिसन्धानवतां स्वयं तादृशाभिनिवेशाभाववतामेवंविधविषये अपवादानवकाशात् लोकानुत्सादाच्चेत्यादिकमभिसन्धायाह--

मू०–भक्ष्याऽभक्ष्ये भयविरहितस्सर्वतो भक्षयित्वा ।
सेव्याऽसेव्यौ समयरहितस्सेवया तोषयित्वा ॥
कृत्याकृत्ये किमपि न विदन् गर्हितं वाऽपि कृत्वा ।
कर्तुं युक्तं वरवरमुने ! कांक्षितं त्वत्प्रियाणाम् ॥ ५६ ॥

व्या०–भक्ष्याभक्ष्य इति ॥ हे वरवरमुने ! अत्राऽभिनिविष्ट इति प्रथमान्तं पूरणीयम् अभिनिविष्टः पूर्वप्रार्थितसर्वलोकसाक्षिकातिमात्राभिनिवेशवान्पुरुषः, सर्वतो लोकापवादभगवदनभिमतिपरुषार्थहानिभ्यो यत् भयं भाव्यनर्थाशंकनरूपं तेन विरहितस्सन् शून्यस्सन्,भक्ष्याऽभक्ष्ये भक्षयित्वा भक्ष्यम् अर्थसाधकभक्षणक्रियाकर्मभूतम्, अभक्ष्यम् अनर्थसाधकभक्षणक्रियाकर्मभूतं, ते द्वे भक्षयित्वा तद्भक्षणं कृत्वा; इदञ्च त्वत्प्रियाणां काङ्क्षितं कर्तुं युक्तमित्यत्रान्वेति । भक्ष्यं द्वादश्यां मुनिशाकादिकम् अभक्ष्यं लशुनादिकं समयेन व्यव-

स्थारहितस्सन् , सेव्यः अर्थसाधकसेवाकर्मभूतकर्मोपाधिकमातापित्रादिः। असेव्यः अनर्थसाधकसेवाकर्मभूतनीचादिः। तौ सेवया शुश्रूषया, तोषयित्वा सन्तुष्टौ कृत्वा; अस्याऽपि पूर्ववदन्वयः। किमपि गर्हितं न विदन् सन् त्याज्यत्वाविशेषात् गर्हितयोः कृत्याकृत्ययोर्मध्ये एकतरमपि निन्दितत्वेन न जानन्सन्,कृत्याऽकृत्ये अर्थसाधकानुष्ठानविषयानर्थसाधकानुष्ठानविषयभूते कृत्वा अस्यापि पूर्ववदन्वयः। वाअपी त्याभ्यामेषां विकल्पौ समुच्चयौ लभ्येते, त्वत्प्रियाणां ये त्वयि प्रीयन्ते, येषु त्वं प्रीयसे तेषामित्यर्थः। कांक्षितं कांक्षार्हम् अर्हार्थे क्तः अनेन तदीयविषयकांक्षाविषयत्वानर्हकरणव्यावृत्तिः अधिकारिणोऽभिनिवेशातिशयस्वरूपपर्यालोचनायान्तु नैव तत्प्रसक्तिरिति हृदयम्।उक्तश्चैतैरेव "अपगतमदमानैरन्तिमोपायनिष्ठैरधिगतपरमार्थैरर्थकामानपेक्षैः। निखिलजनसुहृद्भिर्निर्जितक्रोधलोभैर्वरवरमुनिभृत्यैः" इति कांक्षावैलक्षण्यं कर्तुं युक्तं निष्पादयितुमर्हं इत्यर्थः। अत्राभिनिविष्टपुरुषकर्तृकमभिनिवेशवशेन निर्भयतत्कर्तृकभक्ष्याऽभक्ष्यभक्षणहेतुकं यत्त्वत्प्रियाणां कांक्षाविरहत्वार्हकैंकर्यकरणं तदभिनिविष्टोऽर्हतीति बोधः।एतादृशाभिनिवेशशून्यानां विषयचापल्येन केवलं तद्वत्ताभिनयः परवञ्चनामात्रमिति सम्प्रदायविदः यथा "वृद्धौ च मातापितरौ" इत्यादेरकिञ्चने दोषाभावबोधकत्वम्; यथा वा "सर्वान्नानुमतिश्च प्राणात्यये"इत्यस्याऽऽपदि तत्त्वम्। तथैव "अत्यन्तंभक्तियुक्तनाम्" इत्यस्य स्वरूपानुरूपाभिनिवेशवद्विषये दोषाभावबोधकत्वमिति। अभिनिविष्टस्त्वत्प्रियाणां कांक्षितं कर्तुं युक्तं ~~कर्तुं~~ योग्यः युक्तमित्यव्ययम्॥ ५६॥



अ०—उक्तरीत्या भक्ष्याऽभक्ष्यभक्षणादीनां नानिष्टप्रयोजकत्वं सर्वात्मनापि यदि कथञ्चित् तत्त्वं तथापि दर्शितकैंकर्यरूपमहाफलसिद्धौ सत्यां तदकिञ्चित्करमित्याह—

मू०—वृत्तिं त्रातुं वरवरमुने! विश्वतो वीतरागैः।
प्राप्यं सद्भिः परमिदमसौ नेच्छति ब्रह्मसाम्यम्॥
निर्मर्यादः पततु निरये निन्दितैरप्यनल्पै—
र्लब्ध्वा किञ्चित्त्वदनुभजनं त्वन्मुखोल्लासमूलम्॥५७॥

व्या०—वृत्तिमिति॥ हे वरवरमुने! असौ चरमविषयाभिनिवेशवान् अयञ्जनः, विश्वतो वीतरागैः प्राप्यम् ऐश्वर्यादिसर्वपुरुषार्थविषयककामनाशून्यैः सद्भिः ब्रह्मज्ञानवद्भिः प्राप्यम्। प्राप्तुं शक्यम्। इदं सत्यामिच्छायां सिद्धप्रायम्, परं ब्रह्मसाम्यं परमात्मपरमसाम्यम्, नेच्छति न वाञ्छति किमर्थं तत्राह वृत्तिं त्रातुमिति। लब्धचरमनिष्ठात्मकवृत्तिरक्षणार्थमित्यर्थः। निर्मर्यादः अतिमात्राऽभिनिवेशवशेन मर्यादां व्यवस्थामतिक्रांतोऽयञ्जनः अनल्पैः अपरिमितैः निंदितैः निषिद्धकृत्यैर्हेतुभिः। त्वन्मुखोल्लासमूलं त्वदीयस्वरसप्रीतिहेतुभूतं त्वदनुभजनं त्वत्कैंकर्यविशिष्टत्वदीयकैङ्कर्यम्, लब्ध्वा तल्लाभवान्सन् निरये पततु अपि नरके पततिचेत्, कामं पततु इति भावः॥ ५७॥

अ०—एवञ्चरमप्राप्यकैंकर्यस्याऽऽवश्यकत्वं प्रतिपादितम्, अथ तदर्थं लीलाविभूतौ वासमपेक्षते—

मू०—नाऽसौ वासं नभसि परमे वाञ्छति त्वत्प्रसादात्।
मर्त्त्यावासो यदिह सुलभः कोऽपि लाभो महीयान्॥

किञ्चित्कृत्वा वरवरमुने ! केवलं त्वत्प्रियाणां ।
पश्यन् प्रीतिं भवति भवतो वीक्षणानां निधानम्॥५८॥

व्या०—नासाविति ॥ हे वरवरमुने ! असौ त्वद्विषयेऽत्यन्ताभिनिविष्टोऽहमित्यर्थः । परमे नभसि श्रीवैकुण्ठदिव्यभुवने, वासं न वाञ्छति नेच्छति यत यस्मात् । इह लीलाविभूतौ महीयान् अतिशयेन महान् कोऽपि विलक्षणः लाभः महत्तरविलक्षणलाभभूव इत्यर्थः । मर्त्यानामप्यावासः त्वत्प्रसादाद्धेतोः सुलभः तस्मान्न वाञ्छतीति पूर्वत्र सम्बन्धः । मर्त्यावासस्य लाभहेतुत्वमाह किञ्चिदित्यादि । त्वत्प्रियाणां तत्र त्वयि च प्रियाणाम्, किञ्चित्कृत्वा शेषवृत्तिं कृत्वा केवलं त्वत्प्रियाणां प्रीतिं पश्यन् स्वार्थतागन्धराहित्येन स्वकृतकिञ्चित्कारजनिततदीयप्रीतिश्चैतन्यफलतया जानन् भवतो वीक्षणानां भवदीयकटाक्षाणाम् निधानं अक्ष्णां अधिकरणभूतो भवति ॥ ५८ ॥

अ०—स्वाधीनपरमपदगमने विलम्बहेतुं तेन विना तत्र स्वस्य गमनेऽपि प्रयोजनाभावश्चाह—

मू०—अस्माद्भूयांस्त्वमसि विविधानात्मनश्शोधयित्वा ।
पद्माभर्तुः प्रतिदिनमिह प्रेषयन् प्राभृतानि ॥
तस्मिन्दिव्ये वरवरमुने ! धामनि ब्रह्मसाम्या-
त्पात्रीभूतो भवति भगवन् ! नैव किञ्चिद्दयायाः॥५९॥

व्या०—अस्मादिति ॥ हे भगवन् ! उभयविभूतिनिर्वाहक[1] वरवरमुने ! विविधान् जन्मवृत्तज्ञानैरुच्चावचान् आत्मनः स्वाभाविकशेषत्वज्ञानानन्दमयत्वलक्षणचेतनान्, शोधयित्वा "मलप्रक्षालनान्मणेः" इत्युक्तरीत्या परिशुद्धान् कृत्वा, पद्माभर्तुः उत्तरवाक्यदिशाप्राप्यभूतश्रीमन्नारायणाय, प्राभृतानि उपादानद्रव्याणि, उपहारत्वेनेत्यर्थः । अस्मात् संसारमण्डलात् प्रतिदिनं प्रेषयंस्त्वं पद्माभर्तुरिह भूयान् असि बहुमतोऽसि, अत एव तव परमपदगमने विलम्ब इति भावः । दिव्ये तस्मिन् धामनि श्रीवैकुण्ठदिव्यभुवने, ब्रह्मसाम्यात् परमात्मना तुल्यनिरतिशयानन्दाद्धेतोः, अयञ्जनः भवतो दयायाः त्वदीयनिर्हेतुकपरदुःखदुःखित्वरूपकृपायाः, किञ्चिदपि पात्रीभूतः ईषदपि विषयीभूतो नैव भवति ततस्त्वां विना तत्र गमनेऽपि नोद्देश्यसिद्धिरिति भावः ॥ ५९ ॥

अ०—त्वदनुभवरूपपरमपुरुषार्थस्य इहैव लाभे भूतल एव नित्यवासो न विरुद्ध इत्याह—

मू०—जप्यंनान्यत्किमपि यदि मे दिव्यनाम्नस्त्वदीया-
न्नैवोपास्यं नयनसुलभादंघ्रियुग्मादृते ते ॥
प्राप्यं किञ्चिन्न भवति परं प्रेष्यभावादृते ते ।
भूयादस्मिन् वरवरमुने ! भूतले नित्यवासः ॥ ६० ॥

व्या०—जप्यमिति ॥ हे वरवरमुने ! त्वदीयाद्दिव्यनाम्नः दिवि भवं दिव्यं दिवे हितं वा दिव्यम् । अनेन भोग्यत्वोपायत्वे उक्ते; तादृशभवन्नामधेयात्; अन्यत् भगवन्नामादिकं मे न जप्यं यदि मत्कर्तृकनिरन्तरानुसन्धानविषयं न यदि नयनसुलभात् चक्षुषा सुखेन लब्धुमर्हात्, ते अंघ्रियुग्मात ऋते भवदीयश्रीपादयुगलं विना नैवोपास्यं यदि कथञ्चिदपि न सेव्यश्चेत्, ते प्रेष्यभावादृते भवदीयशे-

[1] अस्य वरवरमुनेरुभयविभूतिनिर्वाहकत्वं भगवद्रामानुजाचार्यावतारविशेषात् श्रीरामानुजाचार्यस्य तु स्वतन्त्रेण भगवता दत्तमिति सुप्रसिद्धम् उडैयवरिति नाम्ना च ।

षवृत्तिं विना परं प्रकृष्टं, किञ्चिदेकमपि प्राप्यं न भवति यदि प्राप्तिफलं न भवति । यदि, अस्मिन् भूतले रजस्तमःप्रचुरायामपि लीलाविभूतौ, नित्यवासः कालतत्त्वव्याप्तवासः भूयात् भवितुमाशंसाविषयः । आशिषि लिङ्; आशीः आशंसा ॥ ६० ॥

अ०–एवं प्रार्थितत्वेऽपि "प्रियजनमपश्यन्ती पश्यन्ती राक्षसीगणम्" इति रीत्या यदि प्रतिकूलैस्सह स्थितिरनुकूलसहवासालाभश्च स्याताम्, तदा देहत्यागविषयककर्तव्यताऽध्यवसायं देहीति प्रार्थयते-

मू०–मन्त्रो दैवं फलमिति मया वाञ्छितं यद्यपि स्या–
न्मध्ये वासो मलिनमनसामेवमेवं यदि स्यात् ॥
यद्वा किञ्चित्त्वदनुभजनं सर्वदा दुर्लभं स्या–
द्देहं त्यक्तुं वरवरमुने ! दीयतां निश्चयो मे ॥६१॥

व्या०–मन्त्र इति ॥ हे वरवरमुने! मन्त्रो दैवं फलं स्यात् इति यद्यपि मया वाञ्छितमित्यन्वयः । पूर्वश्लोके जपन्नान्यदित्यादिना त्वदीयदिव्यनामरूपमन्त्रः, भवदंघ्रिमूलरूपदेवता, त्वदनुभजनरूपफलञ्च स्यात् इति यद्यपि मया प्रार्थितमेवेत्यर्थः । मध्ये इत्यादि अत्र तथापीति शेषः । तथाऽपि एवं प्रार्थिते सत्यपि, मलिनमनसां भवत्प्रावण्यविरोधिरजस्तमःकलुषितहृदयजनानां मध्ये वासः मध्ये स्थितिः, एवमेवम् एतेनैतेन प्रकारेण, स्याद्यदि अवर्जनीयतया भावी चेदित्यर्थः।यद्वेति पूर्वोक्तदुर्जनमध्यवासातिरेकेणेत्यर्थः । किञ्चित्त्वदनुभजनं सर्वदा दुर्लभं स्यात् यदि बहुविधेषु त्वदीयमुखोल्लासार्थवृत्तिविशेषेषु एकापि त्वदनुकूलवृत्तिरलभ्या भवेच्चेत्, देहं त्यक्तुं निश्चयो मे दीयताम् । उक्तरीत्या निरर्थकस्य देहस्य त्यागविषयनिश्चयो मह्यमकिञ्चनाय दीयतां त्वयेति शेषः प्रार्थनायां लोट् । अत्र"न हि मे जीवितेनार्थः नैवार्थैर्न च भूषणैः।वसन्त्या राक्षसीमध्ये विना रामं महारथम्" इत्युक्तजनकराजतनयाशैली स्फोर्यते । मध्य इत्यनेन परितो विद्यमानेषु प्रतिकूलेषु त्वदलंकृतदिगवलोकनमपि प्रतिरुद्धमिति व्यज्यते । सर्वदेति पदेन जाग्रद्दशायां स्वप्नदशायाञ्च त्वदनुभजनं दुर्लभं स्यादित्यर्थलाभात् "स्वप्नेऽपि यद्यहं वीरं राघवं सह लक्ष्मणम् । पश्येयं नावसीदेयं स्वप्नोऽपि मम मत्सरी" इति श्लोकार्थो व्यज्यते । देहं त्यक्तुमित्यत्र "विषस्य दाता न हि मेऽस्ति कश्चिच्छस्त्रस्य वा" इति श्लोकार्थो व्यज्यते ॥ ६१ ॥



अ०–मन्त्रो दैवमिति मन्त्रप्रसङ्गात् तत्प्रदत्वेन श्रीरंगनाथं कृतज्ञतयाऽनुसन्धत्ते–

मू०–आचार्यत्वं तदधिकमिति ख्यातमाम्नायमुख्यै–
रेष श्रीमान् भवति भगवान् ईश्वरत्वं विहाय ॥
मन्त्रं दाता वरवरमुने ! मन्त्ररत्नं त्वदीयं ।
देवः श्रीमान् वरवरमुनिर्वर्तते देशिकत्वे ॥ ६२ ॥

व्या०–आचार्यत्वमिति ॥ हे वरवरमुने ! श्रीमान् श्रिया नित्ययुक्तः, भगवान् नित्यासंकुचितज्ञानशक्त्यादिगुणपरिपूर्णः एषः श्रीरंगनाथः, कर्ता आम्नायमुख्यैः श्रुतिपाञ्चरात्रेतिहासादिभिः, ख्यातं प्रपञ्चितम्, ईश्वरत्वं समस्तचिदचिन्नियन्तृत्वम्; विहाय तिरोधाप्य, शेषित्वं वा तिरोधाप्य; किञ्च, देवः दीप्तिमान् निर्दोषः, श्रीमान्

कल्याणगुणाकरः, वरवरमुनिः कान्तोपयन्तृयोगी देशिकत्वे आचार्यपदे, वर्तते तिष्ठति तत् तस्मात् महाजनपरिग्रहाद्धेतोः; आचार्यत्वम् अभिमतोपदेष्टृत्वम्, अधिकमिति मत्वा ईश्वरत्वशेषित्वाभ्यामतिशयितमिति मत्वा, मन्त्ररत्नम् अनुसन्धातृरक्षकतया प्रसिद्धमूलमन्त्रादिमन्त्रेषु श्रेष्ठं त्वदीयं तावकं मन्त्रम् "श्रीशैलेश" इत्यादिमन्त्रं दाता भवति । ददातीत्यर्थः मन्त्रदातृत्वेन सत्तावानिति वाऽर्थः मन्त्रं दातेति तृन्नन्तदातृशब्दयोगान्मन्त्रमिति द्वितीया श्रीरंगनाथस्य किल देशिकत्वे वरवरमुनेर्वर्तनादीश्वरत्वापेक्षयाऽऽचार्यत्वमतिशयितमिति मत्वा ईश्वरत्वं तिरोधाप्य त्वन्मन्त्रप्रकाशनेनाऽऽचार्यत्वमनुभवतीति भावः । मत्वेति अध्याहारलब्धम् ॥ ६२ ॥

अ०—भगवत आचार्यत्वाभिलाषे सत्यपि वरवरमुनिमन्त्रप्रकाशनेन कुतस्तत्स्वीकृतमिति शंकायां देहात्माभिमानादिनात्यन्तमधःपततामस्मादृशां स्वपादच्छायाप्रापणात्मकमहोपकारकर्तुर्वरवरमुनेः प्रत्युपचिकीर्षुः श्रीरंगनाथः तस्माद्द्रविडोपनिषद्भाष्यश्रवणप्रयुक्ततच्छिष्यताव्याजेन तन्मन्त्रप्रकाशनमेव तस्य प्रत्युपकृतिं मत्वा तथा कृतवान् इत्याशयेन तन्मन्त्रप्रकाशनादृते तस्य किमपि न विद्यत इत्याह—

मू०—आत्मानात्मप्रमितिविरहात्पत्युरत्यन्तदूरो ।
घोरे तापत्रितयकुहरे घूर्णमानो जनोऽयम् ॥
पादच्छायां वरवरमुने ! प्रापितो यत्प्रसादा-
त्तस्मै देयं तदिह किमिव श्रीनिधे विद्यते ते ॥ ६३ ॥



व्या०—आत्मेति ॥ हे वरवरमुने ! आत्मानात्मप्रमितिविरहात् अयमात्मा ज्ञानानन्दादिलक्षणः अयं देहो मलादिदोषदूषित इत्याकारकयथार्थज्ञानाभावात् प्रत्युत विपरीतज्ञानादित्यर्थः । पत्युरत्यन्तदूरः "पतिं विश्वस्य" इत्युक्तसर्वशेषिणः श्रियः पत्युः बहुविप्रकृष्टः पत्युरिति पञ्चमी षष्ठी वा पत्युर्विप्रकृष्टत्वमिह तत्सन्निकृष्टाभावः सन्निकर्षश्चेह भगवदत्यन्तपारतन्त्र्य[1]ज्ञानम् । तद्धि ज्ञानारोहक्रमे देहात्मविवेकात्तुरीयपर्वनिष्ठं तदुक्तम् "विवेकाऽन्यशेषत्वस्वस्वातन्त्र्यनिवृत्तिपारतन्त्र्याणि" इत्याचार्यहृदये । तथा च देहात्मविवेकेनापि शून्यस्य कथं भगवदत्यन्तपारतन्त्र्यज्ञानरूपतत्सन्निकर्ष इति भावः । घोरे स्मृत्यापि भयावहे तापत्रितयकुहरे आध्यात्मिकादितापत्रयात्मकश्वभ्रे घूर्णमानः सततं भ्रमन् अयञ्जनः अहं मादृशाश्च जना इत्यर्थः । जात्येकत्वपरमेकवचनम् । पादच्छायां पत्युश्चरणारविन्दसन्निकर्षम्, यत्प्रसादात् यस्य तव प्रसादात् विशेषकटाक्षात्, प्रापितः अनुमतिमात्रेणापि शून्यः केवलं दण्डादिवन्नीतः[2] प्राप्त इति वक्तव्ये प्रापित इत्युक्तिबलात् उक्तार्थलाभः "विष्णुश्शेषी तदीयश्शुभगुणनिलयो विग्रहः श्रीशठारिः श्रीमान् रामानुजार्यः पदकम-

१ पारतन्त्र्यम् पराधीनफलत्वपराधीनकर्तृत्वस्वरक्षणोपायप्रवृत्त्यनर्हत्वादिरूपेणानेकविधम् राज्ञो भृत्यः स्वकर्मानुगुणफलमात्रे पराधीनः अतस्स परतन्त्रः, पराधीनस्वीयकृतिसाध्यसाधनप्रीतिपराधीनफलकत्वादुपासकः ईश्वरस्याऽतिपरतन्त्रः, पराधीनाखिलस्वव्यापाराधीनसाधनताकपराधीनफलकत्वात् प्रपन्नः ईश्वरस्याऽत्यन्तपरतन्त्रः, अनेनात्यन्तपारतन्त्र्यन्नाम स्वरक्षणोपायप्रवृत्त्यनर्हत्वमिति वाग्भूषणटीकायामुक्तम् ।

२ दण्डादिभिरिति पाठे तु यतीन्द्रप्रवणप्रभावादैतिह्यमूह्यम् ।

लयुगं भाति रम्यं तदीयम्" इति रीत्या पत्युः पादो रामानुजार्यः तस्य छाया श्रीमद्वरवरमुनिः तं प्रापित इत्यप्यर्थः । तस्मै ते तथा-विधाय तुभ्यम्, श्रीनिधेः श्रियः पत्यापि इह उक्तोपकारविषये यद्देयम् प्रत्युपकृतिविधया यद्दानार्हम्, तत् किमिव पूर्वश्लोकोक्तत्व-न्मन्त्रप्रकाशनादृते न किमपि विद्यत इत्यर्थः । श्रीनिधेरिति कृत्यानां कर्मणि षष्ठी । अत्र पत्युः पादच्छायामित्यनेन "पादच्छाया सुखा भर्तुस्तादृशस्य महात्मनः।स हि नाथो जनस्याऽस्य स गतिस्स परायणम्" इति श्लोकस्थनिर्देशः प्रत्यभिज्ञाप्यते । स हि श्लोको मन्त्ररत्नमूलमन्त्रार्थव्यञ्जकः तादृशस्येति पदमुपायत्वोपेयत्वोपयुक्त-गुणजातपरम्, महात्मनः इत्यनन्यसाध्यत्वपरम्, पत्युः इति एतद् वर्जनीयसम्बन्धपरम्, पादच्छायेत्यनेन "चित्तालम्बनसौकर्यकृपो त्तम्भनहेतुभिः । उपायत्वमिह स्वामिपादयोरनुसंहितम्" इत्युक्तरीत्या कृपोत्तम्भनहेतुचरणशब्दार्थ उक्तः । सुखेत्यनेन प्राप्यभेद उक्तः, छायेत्यनेन विश्रमस्थानत्वं व्यज्यते, स हि नाथ इत्यनेन शेषित्वपरप्रणवार्थ उक्तः, स गतिः इति शरण्यत्वपरनमश्शब्दार्थ उक्तः, स परायणमिति प्राप्यत्वपरव्यक्तचतुर्थ्यन्तनारायणशब्दार्थ-श्चाऽनुसंहित इति सारज्ञाः समाकलयन्तु ॥ ६३ ॥

अ०–'यत्प्रसादात्' इत्यत्राऽभिप्रेतमज्ञातज्ञापनविधया रक्षकत्वमाह-

मू०–विख्यातं यद्रघुकुलपते विश्वतः क्ष्मातलेऽस्मि-
न्नित्योदग्रं वरवरमुने ! निस्सपत्नं महत्त्वम् ॥

१ पत्युरिति पुस्तकद्वयेऽपि पाठो दृश्यते तथा श्लोकेपि पत्युरित्येव पाठो वक्तव्यः तथा न दृश्यते अतोऽत्रापि 'भर्तुः' इत्येव पाठः स्वीकर्तव्यः पतिशब्दस्य शेषिपरत्वेन गीताभाष्यश्रुतप्रकाशिकादिषु स्वीकृतत्वात् 'शेषिण' इत्युक्तम् ।



पश्यन्नन्धः प्रकृतिविवशो बालिशो यादृशोऽयं ।
तत्त्वं तस्य प्रकटयसि मे तादृशैरेव योगैः ॥ ६४ ॥

व्या०–विख्यातमिति ॥ हे वरवरमुने ! विश्वतः क्ष्मातलेऽस्मिन् शत्रुमित्रमध्यस्थावासत्वरूपसर्वप्रकारविशिष्टेऽस्मिन् भूमण्डले, विख्यातं विशेषेण प्रसिद्धं "विदितः स हि धर्मज्ञः शरणागतवत्सलः" इत्युक्तेः। नित्योदग्रम् नियतोद्भूतं; "क्रोधमाहारयत्तीव्रम्" इत्युक्तरीत्या क्रोधा-दिवदनाहरणीयमित्यर्थः "आत्मानं मानुषं मन्ये" इति संकल्प-विशेषेणातिरोहितमिति वार्थः निस्सपत्नं निर्विघातकम्, "अरिः प्राणान् परित्यज्य" "अप्यहं जीवितं जह्याम्" इत्याद्युक्तरीत्या संश्रितसंरक्षणापेक्षया प्राणाद्यनुरोधोऽप्यकिञ्चित्कर इति संश्रितसं-रक्षणस्वभावस्य स्वभावान्तरानुपमर्दत्वमित्यर्थः । रघुकुलपतेः वंशपर्यालोचनयापि शरणागतसंरक्षणेन विनाऽऽत्मधारणमलभमानस्य भगवतः यत् बुद्धिस्थं महत्त्वं, शरणागतरक्षणैकव्रतत्वरूपाक-र्षविशेषः "राघवश्च महाव्रतं" "ददाम्येतद्व्रतं मम" इत्युक्तरीत्या शरणागतरक्षणमेव रामावतारस्य मुख्यप्रयोजनमिति स एवोत्कर्षो विवक्षितः तत्पूर्वोक्तविख्यातत्वादिविशिष्टं, शरणगतरक्षणैकव्रतत्वरूप-महत्त्वं; द्वितीयान्तं प्रकटयसीत्यत्रान्वेति पश्यन्नन्धः चक्षुष्मत्तायां सत्यामपि 'आन्ध्यवान् जीवन्मृतः' इति निर्देशः । चेतनत्वानुरूपसमी-चीनज्ञानरूपमुख्यप्रयोजनशून्य इत्यर्थः । प्रकृतिविवशः तद्धेतुभूत-प्रकृतिसंसर्गवान्, बालिशः मूर्खः विपरीतज्ञानवानित्यर्थः । अज्ञान-विपरीतज्ञानयोर्हेतुत्वद्योतनाय प्रकृतिसंसर्गस्य मध्ये निवेशः अयं अहमिति शेषः । दोषान्तराणामपि सूचनार्थमयमिति निर्देशः

यादृशः यादृगुपायसाध्यतत्त्वज्ञानः भवतीतिशेषः यादृक्छब्दाच्छैषिकोण् प्रत्ययः।यादृक् शब्दस्तादृशशब्दविवक्षितार्थपरः तादृशैरेवाज्ञानादिहेतुभूतं प्रकृतिसंसर्गमभिभूय सम्यक् ज्ञानोत्पादनसमर्थैर्विपरीत ज्ञानाद्युत्पत्तिप्रतिबन्धनसमर्थैः एव कारेण तत्त्वज्ञापनेषु अधिकृताधिकरशास्त्रप्रवर्तनादिनियतोपकरणकभगवद्व्यावृत्तिः योगैः उपायैः सम्यगुपदेशनिर्हेतुककृपादिरूपाणां तन्त्रेण संग्रहाय योगैरिति सामान्यशब्दोपादानं,त्वं मय्यर्थप्रसन्नस्त्वं,तस्य मे 'पश्यन्नन्ध' इत्याद्युक्तविशेषविशिष्टस्य मम रघुकुलपतेर्महत्त्वं प्रकटयसि"मित्रभावेन सम्प्राप्तम्""सकृदेव प्रपन्नाय"इति तदीयचरम[1]श्लोकार्थोपदेशेन प्रत्यक्षयसीत्यर्थः॥ ६४ ॥

अ०–'तादृशैरेव योगैः' इत्यत्राऽभिप्रेतं वैभवप्रदर्शनं स्फुटयन् तत्पुरस्सररहस्यत्रयार्थोपदेष्टृत्वरूपं रक्षकत्वमनुसन्धत्ते--

मू०--लक्ष्मीभर्तुः परमगुरुतां लक्षयन्ती गुरूणां ।
पारम्पर्यक्रमविवरणी या हि वाणी पुराणी ॥
अर्थं तस्याः प्रथयसि चिरादन्यतो यद्दुरापं ।
दिव्यं तन्मे वरवरमुने ! वैभवं दर्शयित्वा ॥ ६५ ॥

व्या०--लक्ष्मीभर्तुरिति ॥ हे वरवरमुने ! लक्ष्मीभर्तुः श्रियः पत्युः परमगुरुतां यस्मात् परमुत्कृष्टो मा, स परमः, परमश्चासौ गुरुश्च परमगुरुः, परमगुरोर्भावः परमगुरुता,तां परमाचार्यत्वमित्यर्थः। गुरुत्वमिह हितोपदेशेनाऽन्धकारनिवर्तकत्वम्, तत्र परमत्वञ्च निर्हेतुककृपामूलकम्, उक्तञ्च" अस्थाने स्नेहकारुण्यधर्माऽधर्मधियाकुलम् ।

१ चरमोपायप्रतिपादकपरत्वेन चरमश्लोक इति सम्प्रदायविदः पठन्ति ।



पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणङ्कृतम्" इति । लक्ष्मीभर्तुः इत्येनेन भगवत आचार्यत्वे लक्ष्म्याः वाल्लभ्येन प्रेरकत्वादिकं लभ्यते. लक्षयन्ती द्योतयन्ती, आचार्यत्वं हि भगवत्सङ्कल्पविशेषः; उपदेष्टृकत्वादिकं तु तद्व्यञ्जकम् अत एव लक्षयन्ती इत्युक्तम्। गुरूणां भगवतोऽर्वाचीनानामाचार्याणां पारम्पर्यक्रमेण परम्परैव पारम्पर्यम्, स्वार्थे ष्यञ् परम्परा च क्रमतोत्पत्तिकानां विजातीयाव्यवहितानां समुदायः तेन क्रमेणाऽयौगपद्येन बहुकालप्रयुक्तविलम्बाभिप्रायकः क्रमशब्दः, विवरणीया हि प्रकाशनार्हा हि पुराणी वाणी नित्या वाक्, रहस्यत्रयरूपा लक्ष्मीभर्तुः परमगुरुतां लक्षयन्ती पुराणी वाणी गुरूणां पारम्पर्यक्रमाविवरणीया हीत्यन्वयः । तस्याः पूर्वोक्तरीत्या प्रसिद्धाया रहस्यत्रयरूपाया वाण्याः अर्थम् अभिधेयम् प्रथयसि प्रकाशयसि "प्रथ प्रख्याने" किं कृत्वेत्यपेक्षायामाह–चिरादित्यादि । यत् प्रसिद्धं यादृशं वरवरमुनेर्वैभवम् अन्यतः वरवरमुनिव्यतिरिक्तात् भगवतोऽपि मुखयितुं प्रकाशयित्वेत्यर्थः । क्रियार्थोपपदस्येति चतुर्थी वैभवं दर्शयित्वा तस्या अर्थं प्रथयसीति पूर्वेणान्वयः केवलं हिततमार्थोपदेशे मन्दानामप्रामाण्यशंका स्यादिति तन्निराकरणार्थं स्वीयाप्रकृतवैभवप्रदर्शनपूर्वाकं तदुपदेशः अनेन च यथा भगवता चरमश्लोकोपदेशः कृत इति व्यज्यते ॥ ६५ ॥

अ०–अन्यतो दुरापमित्युक्तं विशिनष्टि–

मू०–तत्त्वं यत्ते किमपि तपसा तप्यतामप्यृषीणां ।
दूराद्दूरं वरवरमुनेदुष्कृतैकान्तिनो मे ॥

व्याकुर्वाणः प्रतिपदमिदं व्यक्तमेवं दयावा-
न्नाथो नैतत्किमिति जगति ख्यापयत्यद्वितीयम् ॥ ६६॥

व्या०—तत्त्वमिति॥ हे वरवरमुने ! अप्राकृतवैभवस्य तव किमपि अपरिच्छेद्यम् यत प्रसिद्धं तत्त्वम् अकुण्ठज्ञानशक्त्यादिविशिष्टस्वरूपयाथात्म्यम्। तपसा अभिमतसाधनीभूतकायशोषणात्मनाऽशनादिनियमेन तप्यताम् ऐश्वर्यवताम् अभिमतार्थनिष्पादनसामर्थ्यवतामित्यर्थः।“तप ऐश्वर्ये” वेत्यनुशासनात् तपधातोरैश्वर्यार्थकत्वम्।तप्यमानानामिति वक्तव्ये तप्यतामित्युक्तिरनुदात्तत्वनिबन्धनमात्मनेपदमित्येतन्मूलिका वा शब्द उत्तरावयव इत्यभ्युपगमात् एवंविधानामृषीणामपि योगमूलकज्ञानवैशद्यवतां दूराद्दूरम् अत्यन्तदुर्ज्ञेयम् इदम् एतादृशं तव तत्त्वम् दुष्कृतैकान्तिनो मे दुष्कृतेषु पापकर्मसु एकान्तिनः नैयत्यवत इत्यर्थः। मुख्यकर्तव्यताविषयकनिश्चयवत इति वा मे मम व्यक्तं स्फुटं यथा तथा प्रतिपदं मुहुर्मुहुः, व्याकुर्वाणः प्रकाशयन्, त्वद्वैभवप्रकटनहेतुभूतनिर्हेतुकदयावान् नाथः अस्मत्कुलधनभूतो रघुपतिः, अद्वितीयं नास्ति ईदृशं तथाविधम्, निस्समाभ्यधिकमित्यर्थः। एतत् वैभवम्, एवं यथा मह्यं प्रकाशितवान् तथा,किमिति न ख्यापयति, न प्रकाशयति।अयम्भावः मम वरवरमुनिवैभवप्रकाशने मद्गतदुष्कृतैकान्तत्वं रघुपतिनिर्हेतुकदयाचेति द्वौ हेतू तत्र जगतो दुष्कृतैकान्तत्वाभावात् वा रघुपतेर्दयाभावाद्वा; कस्माद्धेतोर्ममैव त्वद्वैभवं प्रकाशितवान् जगतो न प्रकाशितवान्। रघुकुलपतिर्यदि जगतः प्रकाशयेत, तदाऽहमिव निखिलजगत् वरवरमुनिचरणारविन्दप्रवणं भवेदिति ॥ ६६ ॥



अ०—यत एवं रघुकुलपतिर्जगतो न प्रकाशयति, तत एव वरवरमुनिचरणारविन्दं बहवो नाश्रयन्ते इत्याह—

मू०—कालेकाले कमलजनुषां नास्ति कल्पायुतं किं।
कल्पेकल्पे हरिरवतरन् कल्पते किन्न मुक्त्यै ॥
मृत्वामृत्वा तदपि दुरितैरुद्भवन्तो दुरन्तै-
रद्याऽपि त्वां वरवरमुने ! हन्त नैवाऽऽश्रयन्ते ॥ ६७ ॥

व्या०—काल इति॥हे वरवरमुने! कालेकाले सर्वस्मिन्काले कमलजनुषां भगवन्नाभिकमलजनुषां चतुर्मुखानाम्, “जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः” इत्यमरः। कल्पायुतं कल्पानां परार्धद्वयपरिमितचतुर्मुखजीवनावच्छेदककालविशेषाणाम्,अयुतम् दशसहस्री,आनन्त्यस्येदमुपलक्षणम्, “शतं सहस्रमयुतं सर्वमानन्त्यवाचकम्” इत्युक्तेः।कालेकाल इत्यत्र कल्पानामपक्षयस्थूलकालो विवक्षितः कल्पायुतंनास्ति किमस्त्येवेत्यर्थः। तत्तन्महाकालान्तर्भूता अनन्ता ब्रह्मकल्पास्सन्त्येवेत्यर्थः। कल्पेकल्पे प्रतिब्रह्मकल्पं हरिः दुरितहरणशीलो भगवान्, “हरिर्हरति पापानि”इत्युक्तेः।अवतरन् प्रादुर्भवन्सन्,मुक्त्यै प्राणिनां मोक्षाय, न कल्पते किं सामर्थ्यवान्न भवति किं सामर्थ्यवान् भवत्येवेत्यर्थः। तदपि कालस्यापरिच्छिन्नत्वेऽपि भगवतोऽवतारादीनां मोक्षजननस्वरूपयोग्यत्वेऽपि चेत्यर्थः। मृत्वामृत्वा “जाय[1]स्व मृयस्व”इति “जायन्त” इति श्रुत्युक्तरीत्या उत्तरोत्तरमातृगर्भजननमरणपरम्परावन्तो जना इति शेषः। दुरन्तैः अपरिच्छिन्नैर्दुष्पापोऽ

१ ‘मृयस्व’ इति मात्रमुपलभ्यते ‘क’ पु०।

न्तो येषां तथोक्तैः, प्रापशब्दरूपमध्यमपदलोप्ययं समासः । दुरितैः भगवता त्वद्वैभवप्रकाशनप्रतिबन्धकपापैर्हेतुभिः, अद्यापि दुर्गत्यतिशयवन्तं मां प्रति तत्प्रकाशनकालेऽपि, त्वां नैवाऽश्रयन्ते भगवता प्रकाशितवैभवास्सन्तः अव्यभिचारितोपायं त्वाम्, नाऽऽश्रयन्ते एव हन्तेति परानर्थजनितदुःखातिशयो द्योत्यते ॥ ६७ ॥

अ०—एवं दुरितातिशयेन वरवरमुनिचरणमनाश्रयतामप्राप्तविषयवर्तनमाह—

मू०—कारागारे वरवरमुने ! वर्तमानश्शरीरे ।
तापैरेष त्रिभिरपि चिरं दुस्तरैस्तप्यमानः ॥
इच्छन्भोक्तुं तदपि विषयानेव लोकः क्षुधार्तो ।
हित्वैव त्वां विलुठति बहिर्द्वारि पृथ्वीपतीनाम् ॥६८॥

व्या०—कारागार इति॥ हे वरवरमुने ! कारागारे बन्दिगृहसादृश्यश्च तत्र स्थिते दुःखरूपता जानंतोऽपि अशक्यनिर्गमनकत्वेन, शरीरे क्षणक्षरणाद्युपलक्षितविविधहेयास्पदे शरीरे । उक्तश्च शरीरस्य हेयत्वम् "यदि नामाऽस्य कायस्य यदन्तस्तद्बहिर्भवेत् । दण्डमुद्यम्यलोकोयं शुनः काकांश्च वारयेत्" इति । वर्तमानः स्थितिमान् दुस्तरैः दुःखेन तरितव्यैः अशक्यतरणैरित्यर्थः।त्रिभिस्तापैः गर्भवासादिदुःखपक्षिसरीसृपादिजन्यदुःखयमयातनात्मकदुःखरूपतापत्रयेण, चिरम् अनन्तकालम्, तप्यमानःअपि तप्तो भवन्नपि; अनेन बन्दीगृहे स्थितस्य क्षारादिभिर्भूपनोपमा व्यज्यते। तदपि तथाऽपि, "आहारोऽपि न रोचेत किमुतान्या विभूतयः"इत्युक्तदशाविशेषप्रयोगेऽपीत्यर्थः । विषयानेव शब्दादीनेव, येषामनुभवः शरीरस्थित्यादिहेतुः, तानेवेति एवकाराभिप्रायः भोक्तुमिच्छन् अनुभवितुमभिलषन्सन्, इच्छन् इत्यनेन विषयाणामलाभस्सूच्यते क्षुधार्तः क्षुद्रपुरुषसेवयाऽन्नपानादिराहित्येन क्षुत्तृष्णादियुक्तः, उक्तश्च "वस्त्राभावाद्गगनवसनस्तैलशून्यो जटावान् शूली जातः कदशनवशाद्भैक्ष्ययोगात्कपाली ॥ इत्थं नित्यं त्वदुपसदनादीश्वरत्वं मयाप्तं कस्माद्धेतोः कथय नृपते नार्द्धचन्द्रं ददासि" इति । एवं विधः, एष लोकः परिदृश्यमानविविधदुःखभाजनं जनः, त्वां निरुपा ( धिक ) यपुरुषार्थप्रदं निरुपायपुरुषार्थभूतश्च त्वाम्, हित्वैव त्यक्त्वैव, अनाश्रित्यैवेत्यर्थः । हित्वेत्यनेन लब्धप्रायत्वं व्यज्यते । एवकारेणाऽप्राप्तिव्युदासः पृथ्वीपतीनां भूपतीनाम्, अनेन तेषां बहुत्वमल्पैश्वर्यश्च लभ्यते । बहिर्द्वारि बाह्ये द्वारि, बहिरित्यनेन यद्यान्तरद्वारे गत्वा प्रतीक्षेत तदा बाह्यो जनः किमप्ययमन्तर्गत्वा राज्ञा मन्त्रयते तस्मादयमस्मत्कार्यं निष्पादयेदिति भ्रमेण द्रव्यप्रदानादिनोपकुर्यात् तदपि नेति व्यज्यते । एतेन राज्ञां दुर्लभत्वमुच्यते विलुठति अनवस्थितस्थित्यासनादिमान् भवतीत्यर्थः ॥ ६८ ॥

अ०—त्रिभिस्तापैरित्युक्ततापत्रयस्वरूपं विवृण्वन् तत्सम्बन्धनिबन्धनं देहिनोऽतिजुगुप्सितत्वमाह—

मू०—मध्ये मांसक्षतजगहनं विड्भुजामेव भोज्यं।
दीनो वोढुं दृढमिति वपुश्चेष्टते राज्यहानि ॥
भग्ने तस्मिन् परिणमति यः पातकी यातनाभ्यो ।
देही नित्यो वरवरमुने ! केन जिज्ञासनीयः ॥ ६९ ॥

व्या०—मध्य इति ॥ हे वरवरमुने ! यः अनुभूयमानविविध-दुःखानुभवः देही मध्ये मांसक्षतजगहनं मांसक्षतजात्मकगर्भभस्त्रा-रूपकलेवरप्रदेशमध्ये, "पारे मध्ये षष्ठ्या वा" इति समासः,मातुरिति शेषः विड्भुजामेव तत्रत्यविष्टाभोजनशीलक्रमिणामेव,भोज्यम् अन्नभूतं वपुः शरीरं दृढमिति स्थिरमिति मत्वा, वोढुं धारयितुम्, दीनः ताप-त्रयाऽभिहतिहेतुभूतभाग्यहानिमान्, य इत्यत्रान्वेति रात्र्यहानि रात्रिषु कार्त्स्न्येन, अहस्सु कार्त्स्न्येन चेत्यर्थः। अत्यन्तसंयोगे द्वितीया चेष्टते शरीरधारणार्थंहिताहितप्राप्तिपरिहारार्थस्पन्दवान्भवति, तस्मिन् पूर्वो-क्तशरीरे, भग्ने सति नष्टे सति, पातकी शरीरसम्बन्धनिबन्धनदुरितवान् यो देही यातनाभ्यः परिणमति यमलोकानुभाव्यतीव्रवेदनानुभवार्थं नारकशरीरसम्बन्धलक्षणावस्थावान् भवति; यातनाभ्य इत्यत्र क्रियार्थोपपदस्येति चतुर्थी स देही तथाविधदेहविशिष्टो जीवः,नित्यः स्वरूपेणोत्पत्तिविनाशरहितोऽपि;अपि शब्दाऽध्याहारः.केन कुतोहेतोः जिज्ञासनीयः ज्ञातव्यतया इष्टः, तद्विषयज्ञानमप्यनिष्टं भवतीत्यर्थः । अत्र प्रथमपादेन गर्भवासदिदुःखरूपआध्यात्मिकादिताप उक्तः; द्वितीयपादेन पिपीलिकादिजन्यदुःखरूपआधिभौतिक उक्तः । चेष्टाया हिताहितप्राप्तिपरिहारार्थस्पन्दरूपत्वात् परिहारस्य च प्राप्तिपूर्व कत्वात् उक्तार्थलाभः, तृतयिपादेन च याम्ययातनारूप आधिदैविक-ताप उक्तः।तुरीयपादेन चैवंविधस्य चाऽतिजुगुप्सितत्वमुक्तम् ॥ ६९॥

अ०—ननु सत्यपि तापत्रयाभिघाते मध्ये कानिचित्सुखानि सन्त्ये-वेति कथं केन जिज्ञासनीयः इत्यत्यन्तहेयत्वं मनुष्यजन्मन उच्यते, इतिचेत्, बहुदुःखहेतुभूतदुष्कृतसाध्यस्योत्तरकालमपि दुःखैकान्त-स्य सुखस्य दुःखरूपत्वमेवेति वदन् त्वत्सम्बंधविरहात् मुक्तिमूलमपि शरीरं व्यर्थीकरोति जन इति वरवरमुनिं प्रत्याह—



मू०—अल्पादल्पं क्षणिकमसकृद्दुष्कृतान्येव कृत्वा ।
दुःखोदग्रं सुखमभिलषन्दुर्लभैरिंद्रियार्थैः ॥
मोघं कृत्वा वरवरमुने ! मुक्तिमूलं शरीरं ।
मज्जत्यन्धे तमसि मनुजस्त्वाप्रियस्त्वप्रियाणाम् ॥ ७० ॥

व्या०—अल्पादिति॥हे वरवरमुने!मनुजः"दुर्लभो मानुषो देहः" इत्युक्तरीत्या भाग्यातिशयलब्धमनुष्यजन्मवान् चेतनः, असकृत् मुहुर्मुहुः, दुष्कृतान्येव सुकृतलेशाऽसंकीर्णानि दुरितानि कृत्वा,दुर्लभैः अलभ्यैः इन्द्रियार्थैः शब्दादिविषयैः जन्यमिति शेषः । अल्पादल्पं तुच्छत्वपर्यवसायि क्षणिकं क्षणमात्रस्थायि, दुःखोदग्रं स्वपूर्वोत्तर-कालयोर्दुःखप्रचुरं सुखम् सुखसञ्ज्ञकं अभिलषन् अत्यन्तमिच्छन्सन् अत एव त्वत्प्रियाणां त्वत्प्रीतिमतां तव प्रीतिविषयाणाञ्च, अप्रियः तत्प्रीत्यविषयःतद्विषयकप्रीतिशून्यश्च सन् मुक्तिमूलं"शरीरमाद्यं खलु धर्मसाधनम्" "महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया" इत्युक्तरी त्या मोक्षं प्रति आद्यं साधनं शरीरं मोक्षार्थप्रयत्नविलम्बासहिष्णुत्व क्षयिष्णुत्ववन्तं देहम्, मोघं कृत्वा उक्तरीत्या वैषयिकसुखाभावात् मोक्षसुखाभावाच्च निरर्थकं कृत्वा ,अन्धे तमसि अन्धे ज्ञानहानिकरे तमसि तमोगुणप्रचुरसंसारमण्डले,मज्जति अवगाढो भवति;त्वत्प्रियाणा मप्रियस्सन्मुक्तिमूलं शरीरमित्युक्त्या त्वत्प्रियाणां प्रियत्वे मुक्तिजनन-

स्वरूपयोग्यस्य शरीरस्य मुक्तिफलोपाधायकत्वमिति सूच्यते । प्रिय शब्दः प्रीत्याश्रयवाची, प्रीतिविषयवाची च 'इगुपधज्ञाप्रीकिरः कः' इति सूत्रेण प्रीयते कर्तरि कप्रत्ययविधानात्,प्रियगुम्फ इत्यादिप्रयोगेषु प्रीतिविषयवाचीत्ववश्यंभावाच्च ॥ ७० ॥

अ०—त्वद्विषयकाऽसूयावत्वं त्वद्वैभवोक्तौ परिहसनकर्तृत्वञ्च त्वत्प्रियाणामप्रियत्वे देहिनो हेतुरिति सूचयन् तत्रापि त्वद्वैभवसाक्षात्काराभावो मूलमिति वदन् भवद्वैभवंजनान् साक्षात्कारयेति प्रार्थनामाविष्करोति—

मू०—पश्यन्नेवं प्रभवति जनो [1]नेर्ष्यितुं त्वत्प्रभावं ।
प्राज्ञैरुक्तं पुनरपि हसन्दर्शयत्यभ्यसूयाम् ॥
नश्यत्यस्मिन् वरवरमुने ! नाथ ! युक्तं तदस्मिन् ।
प्रत्यक्षं तत्परिकलयितुं तत्त्वमप्राकृतं ते ॥ ७१ ॥

व्या०—पश्यन्निति ॥ हे वरवरमुने ! जनः त्वत्प्रभावं त्वदीयं निरतिशयोत्कर्षं पश्यन्नेव साक्षात्कुर्वन्नेव न तु शृण्वन्नपीत्यर्थः । ईर्ष्यितुम् असहनवान्भवितुं न प्रभवति न शक्नोति ईर्ष्या हि त्वद्विषये आकृष्यमाणा अपि न गच्छतीति भावः । प्राज्ञैरुक्तं त्वत्प्रभावं पुनरपि हसन् अभ्यसूयां दर्शयति त्वद्वैभवविषयीकरणपर्याप्तप्रकृष्टज्ञानयुक्तपुरुषैरुक्तमुपदिष्टं त्वद्वैभवं तु अवाच्यवादादिना परिहसन् अभितो गुणेषु दोषारोपं दर्शयति प्रकटयति यावन्तस्ते कल्याणगुणाः तेषु सर्वेष्वपि दोषत्वारोपं करोति इति अभिशब्देन लभ्यते । तत् तस्माद्धेतोः नाथ ! स्वामिन् एवम्भूतेष्वपि तेषु दयाकरणनि-

[1] समग्रपद्यतात्पर्यपर्यालोचने नेक्षितुमित्येव युक्तं भाति ।



यामकस्वैकवेदनीयावर्जनीयसंबन्धविशेषयुक्त इत्यर्थः । अस्मिन् प्रकृते जने नश्यति सति पूर्वोक्तरीत्या त्वद्विषयकापचारेण स्वरूपनाशं प्राप्नुवति सति अप्राकृतं ते तत्त्वं दिव्यं त्वद्वैभवम् अस्मिन्प्रत्यक्षं परिकलयितुं युक्तं पूर्वोक्तरीत्या दुर्गत्यतिशयवत्तया पूर्वप्रकृतजनवृत्तिप्रत्यक्षज्ञानविषयीकर्तुमर्हम् अस्मिन्निति पुनरुक्तिर्दुर्गत्यतिशयोपस्थापनार्था । अप्राकृतमित्यत्र प्राकृताः प्रकृतिसंसृष्टाः तेन सन्त्याधारतया यस्य तथोक्तमिति विग्रहः प्रकृतिसंसृष्टपुरुषावृत्तमित्यर्थः दिव्यमिति फलितार्थकथनम् ॥ ७१ ॥

अ०—वरवरमुनिना स्ववैभवस्य सर्वलोकप्रत्यक्षविषयीकरणाभावे तद्विषये जनोऽभ्यसूयां करोति । तथा च स्वरूपनाशं प्राप्नोतीत्युक्तम्; तत्कथमुपपद्यते वरवरमुनिविषयेऽभ्यसूयावतामपि अन्यविषयेऽनसूयूनां पुरुषार्थसिद्धौ सामर्थ्यं स्यात् इत्याशङ्क्य तथाविधानामन्यविषयेऽनसूयत्वादिगुणजातं व्यर्थमेवेत्याह—

मू०—सत्त्वोन्मेषप्रमुषितमनःकल्मषैः सत्त्वनिष्ठैः ।
सङ्गं त्यक्त्वा सकलमपि यः सेव्यसे वीतरागैः ॥
तस्मै तुभ्यं वरवरमुने ! दर्शयन्नभ्यसूयां ।
कस्मै कृत्वा किमिव कुमतिः कल्पतामिष्टसिद्ध्यै॥७२॥

व्या०—सत्त्वोन्मेषेति ॥ हे वरवरमुने ! यः त्वम् ,सात्त्विकगोष्ठिप्रसिद्धज्ञानशक्त्याद्युत्कर्षस्त्वम् सत्वस्य सम्यग्ज्ञानवर्धकतया "सत्त्वात्सञ्जायते ज्ञानम्" इत्यादिशास्त्रप्रसिद्धसत्त्वाख्याऽचिद्द्रव्यगुणविशेषस्य उन्मेषेण उद्भवेन प्रमुषितम् अभिभूतं मनःकल्मषं

रजस्तमोरूपभ्रान्तिज्ञानजनकमनोमलं येषां तथोक्तैः सत्त्वोन्मेषस्य कर्मादिहेतुत्वानुक्तेर्निर्हेतुकभगवत्सौहार्दमूलकत्वं व्यज्यते । अनेन "जायमानं हि पुरुषम्" इति श्लोकोक्तसात्त्विकमुमुक्षुविशेषा उक्ताः। सत्त्वे शुद्धसत्त्वे परमपद इत्यर्थः । निष्ठा स्थितिर्येषां तथोक्तैः नित्यमुक्तैरित्यर्थः । सकलमपि सङ्गं त्यक्त्वा ऐश्वर्यप्रभृतिभगवत्पर्यन्तस्पृहां त्यक्त्वा वीतरागैः त्वत्कैङ्कर्यविषयेऽपि स्वार्थताभिलाषगन्धरहितैः सेव्यसे वारिवस्यसे तत्कर्तृककैङ्करवृत्तिविषयो भवसीत्यर्थः । तस्मै तुभ्यं मुमुक्षुनित्यमुक्तसेव्यभवद्विषये अभ्यसूयां गुणेषु दोषत्वारोपं दर्शयन् न केवलं मनसि तद्वान् अपि तु बहिः प्रकटयन्नित्यर्थः । असूयाशब्दयोगे 'क्रुधद्रुह' इति सूत्रेण विषयतायाश्चतुर्थी विहिता कुमतिः एवंविधाऽभ्यसूयाहेतुभूताऽन्यथाज्ञानविपरीतज्ञानपूर्णोजनः अभ्यसूयां दर्शयन् कुमतिरित्यनेन पूर्वोक्तसेवासत्त्वोन्मेषप्रति कोटि अवस्थाद्वयमुक्तम् । कस्मै किमिव कृत्वा भगवत्प्रभृतिषु कतमस्मै पुरुषाय भक्त्यादिषु निष्कृतिषु कतमत्कृत्वा कल्पताम् । इष्टसिद्ध्यै पुरुषार्थसिद्ध्यै समर्थो भवेत् न कस्मै किञ्चिदपि कृत्वा पुरुषार्थनिष्पादनार्हो भवतीत्यर्थः । नित्यमुक्तादिसेव्यभवद्विषयेऽपचारतो जनस्य तेषु न कोऽपि मुक्त्युपायकिञ्चित्कारप्रतिसम्बन्धीत्यर्थः॥७२॥

अ०—पुनरपि दिव्यवैभवप्रकाशनं प्रार्थयते—

मू०—दिव्यं तत्ते यदिह कृपया देवदेवोपदिष्टं ।
तत्त्वं भूयाद्वरवरमुने ! सर्वलोकोपलभ्यम् ॥
व्यक्ते तास्मिन् विदधति भवद्वैभवद्वेषिणो ये ।
द्वेषं त्यक्त्वा सपदि दुरितध्वंसिनीं त्वत्सपर्याम्॥ ७३ ॥



व्या०—दिव्यमिति ॥ हे वरवरमुने ! दिव्यं आलोकसामान्यम् ते त्वदीयं यत् बुद्धिस्थं तत्त्वं वैलक्षण्यातिशयः इह अस्मिन् जने इति शेषः मयीत्यर्थः । कृपया मद्दुःखाऽसहिष्णुतया देवदेवेन मत्कुलधनभूतरघुनायकेन उपदिष्टम् अज्ञातदशायां ज्ञापितम् तत् ते तत्त्वम् तादृशं त्वदीयनिरतिशयवैलक्षण्यम् । सर्वलोकैः असूयत्वद्वेष्टृत्वादिसर्वप्रकारयुक्तैर्जनैः उपलभ्यं सुज्ञेयं भूयात् भवत्विति प्रार्थना । ये भवद्वैभवद्वेषिणः नामग्रहणस्याऽनर्हाः त्वदीयनिरतिशयवैलक्षण्यविषयाऽप्रीतिनिरूपणीयाः जना ये भवन्ति ते तस्मिन् व्यक्ते सति त्वदीयनिरतिशयोत्कर्षे सम्यक् ज्ञाते सति द्वेषं त्यक्त्वा अप्रीतिं मुक्त्वा सपदि अचिरेण दुरितध्वंसिनीं त्वत्प्राप्तिविरोधिसकलपापनाशिनीं त्वत्सपर्यां त्वत्कैङ्कर्यं विदधति त्वदेकप्रयोजनत्वेन कुर्वन्ति । कर्तृगामिक्रियाफलसूचकस्यात्मनेपदस्याऽभावात् प्रयोजनत्वनिवृत्तिलाभः "अवशाः प्रतिपेदिरे" "झटित्यस्मिन्दृष्टे किमिति परवानस्मि" इत्याद्युक्तरीत्या वैभवसाक्षात्कारः द्वेषनिवृत्त्यादिहेतुर्भवतीत्याशयः ॥ ७३ ॥

अ०—भवदाश्रयणात् पूर्वं दूरतया त्याज्योऽपि भवन्तं सर्वात्मना समाश्रितो जन्मवृत्तज्ञानेष्वेव कतरेण शून्योऽपि जनः मम भवदपेक्षयाऽपि प्रियतर इत्याह—

मू०—केचित्स्वैरं वरवरमुने ! केशवं संश्रयन्ते ।
तानप्यन्ये तमपि सुधियस्तोषयन्त्यात्मवृत्त्या ॥
त्वत्तो नाऽन्यत्किमपि शरणं यस्य सोयं त्वदीयो ।
भृत्यो नित्यं भवति भवतः प्रेयसां प्रेमपात्रम्॥७४॥

व्या०–केचिदिति ॥ हे वरवरमुने! केचित् धन्यताप्रयोजकभगवत्कटाक्षविशेषविषयाः, केऽपि चेतनाः, केशवं प्रकृष्टकेशसौभाग्यवत्तया परमभोग्यभूतम्, केशिहन्तृतया विरोधिनिरसनशीलञ्च श्रियः पतिम्, स्वैरम् उपायोपेयान्तरसंबन्धरूपप्रतिघातराहित्येन संश्रयन्ते उपायोपेयभावेन स्वीकुर्वन्ति; "केशाद्वोऽन्यतरस्याम्" इति सूत्रेण कल्याण इति अनुवर्तितपदसहितेन "केशवः क्लेशनाशनः" इति स्मृत्यंतरसहितेन प्रथमयोजनार्थलाभः; "केशवः केशिहन्ता" इति निर्वचनेन द्वितीययोजनार्थलाभः; अन्ये धन्यतमत्वहेतुभूतभगवत्कटाक्षविशेषविषयाः पूर्वोक्तेभ्योऽपि विलक्षणाः केचित् चेतनाः तानपि तमपि भगवत्प्रवणान् भगवन्तञ्च परस्परसमुच्चयेन आत्मवृत्त्या स्वीयकैंकर्यरूपव्यापारेण, सुधियः कैंकर्यपरिकरभूतपरमभक्तिरूपशोभनज्ञानयुक्ताः सन्तः तोषयन्ति केवलपरार्थतया प्रीणयन्तीत्यर्थः। णिचश्चेत्यात्मनेपदस्याभावेनोक्तार्थलाभः अपि शब्दद्वयेन तुल्यसमुच्चयलाभः "धन्याःकेचन तेभ्योऽपि तेषामादेशवर्तिनः" इत्युक्तधन्यत्वधन्यतमत्वे केचित् अन्य इत्यत्र विवक्षिते ते तिष्ठत्विति हृदयस्थितोर्थः। यस्य पूर्वोक्तकोटिद्वयवैलक्षण्यप्रयोजकभगवत्कटाक्षविशेषविषयस्य, यस्य चेतनस्य; जात्यादिकं न विवक्षितमिति यस्येत्यनेन सूच्यते। त्वत्तः विलक्षणोपायोपेयभूतात् भवतः, अन्यत् इतरत्,परब्रह्मप्रभृतिकमित्यर्थः।किमपि शरणं तद्द्विविधं हि शरणम् उपायोपेयात्मकं, तत्रैकतरदपि यस्य न भवतीत्यर्थः शरणशब्दोऽयं तन्त्रे उपायगृहवाचितया व्याख्यातः, "उपाये गृहरक्षित्रोः शब्दः शरणमित्ययं वर्तते" इत्यनेन किमपि एकमपीत्यर्थः, त्वदतिरिक्तं यस्य उपायभूतमुपेयभूतमुभयं वा न भवति, सः तथाविधः, अयं मम सदा बुद्धिसन्निहितः, त्वदीयः भृत्यः त्वद्भृत्य इति केवलं निरूपणीयः,जन्मवृत्तज्ञानैर्यथा तथा भूतोऽपि जनः, भवतः प्रेयसां भवदपेक्षयाऽप्यतिशयितप्रीतिविषयाणां महात्मनां मध्ये, प्रेमपात्रम् अतिशयितमदीयप्रीतिविषयः, नित्यं सदा, परिचयेऽपि भवतीत्यर्थः चरमाचरमनिष्ठेयं प्रकशिता ॥ ७४ ॥



अ०–"त्वदीयो भृत्यो नित्यं भवति भवतः प्रेयसां प्रेमपात्रम्" इत्युक्तनिष्ठाविशेषहेतुभूतायां वरवरमुनिदिव्यसन्निधिप्राप्तौ त्वरातिशयं व्यञ्जयति–

मू०–दीने पूर्णां भवदनुचरे देहि दृष्टिं दयाऽऽर्द्रां।
भक्त्युत्कर्षं वरवरमुने! तादृशं भावयन्तीम् ॥
येन श्रीमन्! द्रुतमहमितः प्राप्य युष्मत्पदाब्जं।
त्वद्विश्लेषे तनुविरहितस्तत्र लीनो भवेयम् ॥ ७५ ॥

व्या०–दीन इति॥ हे वरवरमुने! तादृशं पूर्वश्लोकोक्तरीत्या त्वत्संबन्धसंबन्धिविषयेऽपि प्रेमप्रकर्षहेतुभूतं भवत्युत्कर्षं भक्त्यतिशयम्, अतिशयितां भक्तिमित्यर्थः।भावयन्तीं मुहुर्मुहुरुत्पादयन्तीं पूर्णां समग्रां दयया मदनर्थाऽसहिष्णुत्वेन, आर्द्रां शीतलाम् आर्द्राम् इत्यनेन दयायास्सुधाप्रायत्वं व्यज्यते दृष्टिम्। विशेषकटाक्षरूपां दृष्टिम्, भवदनुचरे भवत्परिजनभूते दीने भवत्परिजनत्वातिरेकेण भवत्प्राप्त्युपायेषु येन केनाऽपि शून्ये मयीति शेषः "उपायैनैव सिद्ध्यन्ति ह्यपाया बहुलास्तथा। इति या गर्वहानिस्तद्दैन्यं कार्पण्यमुच्यते" इत्युक्तं दैन्यं दीन इत्यत्र विवक्षितम् देहि। वितर येन भक्त्यु-

त्कर्षेण त्वद्विश्लेषे भवद्वियोगे तनुविरहितः शरीरेण विरहितः विरहाग्निदग्धशरीर इति यावत । अहं त्वद्विप्रकृष्टदेशस्थितोऽहम्, इतः घटिकाचलनिकटभूतात् ग्रामात्, द्रुतं झटिति "अपादाने पञ्चम्यास्तसिः" युष्मत्पादाब्जम् अनुचरवर्गसहितस्य तव श्रीपादारविन्दं प्राप्य प्रकर्षेण लब्ध्वा अपुनर्विश्लेषं सम्बद्धयेत्यर्थः । त्वदनुचराश्च त्वञ्च यूयं "त्यदादीनिसर्वैर्नित्यम्"इति सूत्रेणैकशेषः । तत्र भवत्पादाब्जे, लीनः नामरूपानर्हसम्बन्धवानित्यर्थः । भवेयं स्यां तद्भक्त्युत्कर्षं भावयन्तीमिति पूर्वेणाऽन्वयः तादृशामित्ययं शब्दः केनेत्यस्य प्रतिसम्बन्धिनिर्देशः येनेत्यस्योत्तरयच्छब्दत्वात् एवं शरीरवियोगेनापि प्राप्यत्वोपपादनसौभाग्यातिशयः श्रीमन् इत्यत्रोच्यते त्वद्विश्लेषे तनुविरहितः तत्र लीन इत्यनेन चिन्तयन्तीवृत्तान्तस्स्फोर्यते । एतेनायं चरमदीर्घचिन्तयन्तीति व्यपदेश्यता भजति, चिन्तयन्तीप्रसिद्धा भगवद्विषयप्रावण्यात् दीर्घचिन्तयन्ती भगवान् परांकुशः अयंतु आचार्यविषयकात्यर्थप्रावण्यात् चरमदीर्घचिन्तयन्तीति तथोक्तं चान्यत्राऽनेनैव "वरवरमुनिमेव चिन्तयन्ती मतिरियमेति निरत्ययं प्रसादम्" इति ॥ ७५ ॥

अ०—"मनोरथानामतटाः प्रवाहा" इति न्यायेन वरवरमुनि चरणप्राप्तिर्दुर्लभास्तु तत्रापि तदीयानां मध्ये स्थितिर्दुर्लभास्तु, तथाऽपि वरवरमुनिचरणविमुखानां सहवासाभावमात्रेण पुरुषार्थकाष्ठा सिद्धिर्मम स्यादित्याह—

मू०—त्वत्पादाब्जं भवतु भगवन् दुर्लभं दुष्कृतो मे,
वासोऽपि स्यात् वरवरमुने ! दूरतस्त्वत्प्रियाणाम् ॥



त्वद्वैमुख्याद्विफलजनुषो ये पुनस्तूर्णमेषां ।
दूरीभूतः क्वचनगहने पूर्णकामो भवेयम् ॥ ७६ ॥

व्या०-त्वत्पादाब्जमिति॥हेभगवन् ज्ञानशक्त्यादिकल्याणगुणपूर्ण, हेवरवरमुने ! त्वत्पादाब्जं दुर्लभं त्वदीयपादाब्जं पावनत्वभोग्यत्वादिभिरब्जसादृश्यं विवक्षितम् कर्तृ दुष्कृतः त्वत्पादावचूडनाविरुद्धविषयव्यासङ्गादिदुर्व्यापारकर्तुर्मे भवतु अलभ्यं भवतु कामचारानुज्ञायां लोट् त्वत्प्रियाणां त्वत्प्रीतिविषयाणां त्वयि प्रीतिमताञ्च महात्मनाञ्च, दूरतः विप्रकृष्टदेशे वासोऽपि तत्सहवासरूपपरमपुरुषार्थप्रतिद्वन्द्वितद्विप्रकृष्टदेशस्थितिरपि स्यात् भवतु अपिशब्देनोक्तवासस्याऽत्यर्थहेयत्वं व्यज्यते। तथा च सोऽप्यभ्युपगतो वक्ष्यमाणहेयप्रसंगापेक्षयेति हृदयम् । एवञ्च युष्मत्पादाब्जमिति श्लोकाभिप्रेत तदीयप्राप्त्यपेक्षा व्यञ्जिता तर्हि किन्तवानुमतमित्यत्राह—त्वदित्यादि । ये पुनः ये तु एतादृशानां स्मरणमपि स्वस्य दुस्सहमिति द्योतनाय नामरूपादिविशेषनिर्देशाभावः पुनश्शब्देन तेषां दुर्गति वैलक्षण्यं वाचामभूमिरिति व्यज्यते । त्वद्वैमुख्यात् परमकारुणिके परमप्राप्ते परमसुलभे परमवत्सले त्वयि अद्वेषमात्रस्याप्यभावात विफलं विरुद्धफलकं,जनुर्जन्म येषां तथोक्ताः,वरवरमुनिविषयकाऽऽभिमुख्याभावात् न केवलमेषां प्राप्तफलाऽभावः तेषामसत्कल्पत्वद्योतनाय भवन्तीति नोक्तम्।एषाम् ईदृशानां तूर्णं दूरीभूतः झटिति अपगच्छन्, एषां तूर्णमित्यनेन तादृशानां समीपस्थितिरिदानीमिति व्यज्यते युक्तश्चैतत् "वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश । त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः" इत्यनुकूलवातातपादिसम्पर्कस्या-

नुकूलत्वे तुल्यन्यायतया प्रतिकूलसंसर्गस्य तस्य प्रतिकूलस्य सिद्धत्वात् पूर्णकामः प्राप्तसकलपुरुषार्थः, भवेयं सद्भावार्ह इत्यर्थः । भवेयमिति प्रार्थना वा त्वदाभिमुख्यं त्वयि प्रीतिमत् त्वद्गुणज्ञानेन धारणं त्वत्समागमस्त्वदीयसमागमश्चेति तरतमभावापन्ना बहवो हि पुरुषार्थाः,तेषां सर्वेषां लाभे यावानानन्दः स सर्वोऽपि मम त्वद्विमुखजनदुर्गमदेशस्थित्येति भावः ॥ ७६ ॥

अ०–ननु, वरवरमुनिविमुखजनसहवासपरिहाराय गहने स्थित्वा पूर्णकामो भवेयमित्यवोचः, तत्र गहनपदेन गुहाविवक्षणे तत्र प्रायशः सिंहव्याघ्रावस्थानसम्भवात् त्वत्प्राणहानिरूपमहानर्थस्स्यात् तेन कुञ्जादिविवक्षायां तत्र प्रायशः सर्वावस्थानसम्भवात् दवानलोपप्लवसम्भवाच्च तत्कृतो महाननर्थस्स्यात, इत्याशंक्य तदप्यभिमतं वरवरमुनिविमुखजनसंसर्गाद्यपेक्षयेत्याह–

मू०–सिंहव्याघ्रौ सपदि विपिने पन्नगः पावको वा-
कुर्युः प्राणान्तकमपि भयं को विरोधस्ततो मे ॥
नैते दोषग्रहणरुचयस्त्वत्प्रियैर्निर्निमित्तै-
र्नानाजल्पैर्वरवरमुने ! नाशयन्त्यन्तिकस्थान् ॥ ७७ ॥

व्या०–सिंहव्याघ्राविति॥हे वरवरमुने!विपिने गुहाकुञ्जादिभूयिष्ठे कानने, सपदि मयि प्रविष्टमात्रेणैव, सिंहव्याघ्रौ हिनस्तीति हिंसः इति हिंसैकनिरूपणीयस्सिंहः हिनस्तीति हिंसः इत्येतत सिंह इति वर्णविपर्ययात् भवति "सिंहो वर्णविपर्ययात्" इत्युक्तेः । व्याजिघ्रतीति व्याघ्रः आघ्राणमात्रेण प्राणिनां प्राणवियोगकारी शार्दूलः । व्याघ्रस्य हि आघ्राणमात्रेण बाधकत्वं प्रसिद्धं "व्याघ्राघ्रातमृगी"



इत्याद्युक्तेः । तौ, पन्नगः दृष्टिविषश्वासविषादिभेदेनाऽनेकविधस्सर्पः, पावकः वह्निः 'वा' शब्देनैतेषां विकल्पसमुच्चयौ विवक्षितौ प्राणान्तकं भयमपि प्राणस्यान्तः प्राणान्तकः तथाविधः प्राणवियोगहेतुमृत्युभूतं भयमपि भाव्यनर्थाशंकनमपि अपिशब्देन प्राणहानिरूपशंक्यमानानर्थस्समुच्चीयते कुर्युः अनुज्ञायां लिङ् ततः सिंहव्याघ्रादिकृतप्राणहान्या मे त्वद्विमुखसहवासमात्रदुःखकस्य मम को विरोधः विरुध्यमानपुरुषार्थः क इत्यर्थः। मदीयपुरुषार्थसिद्धिप्रतिबन्धकः क इति वाऽर्थः त्वय्यविद्यमानदोषग्रहणरूपो वा अप्रियजल्परूपो वा, निर्निमित्तजल्परूपो वा, तद्धेतुकस्वरूपास्थितिरूपो वा न कोऽपीत्यर्थः । तदेव विवृणोति–नैते इत्यादिना । ऐते तु सिंहादयः तुशब्दो वरवरमुनिविमुखजनापेक्षया वैलक्षण्यद्योतकः दोषग्रहणरुचयस्सन्तः दोषस्य ग्रहणमवगमस्तस्मिन् रुचिः अतिशयितेच्छा येषां तथोक्तास्सन्तः वरवरमुनिविमुखजनवदिति शेषः।अप्रियैः सर्वलोकद्वेषविषयैरित्यर्थः। निर्निमित्तैः शब्दस्य निमित्तं ह्यर्थः तद्रहितैरित्यर्थः।अनृतैरिति यावत् अलीकैरिति फलितम् "अलीकं त्वप्रियेऽनृतम्" इति हि कोशः । नानाजल्पैः सर्वोत्तरविरुद्धभाषणं जल्पःबहुवचनेन पौनःपुन्यमुच्यते नानाशब्देन हासानुकारवैविध्यमुच्यते अन्तिकस्थान् स्वसमीपस्थिताञ्जनान्, न नाशयन्ति न नष्टस्वरूपान्कुर्वन्ति वरवरमुनिविमुखास्तु तथा कुर्वन्तीत्यर्थः। रुचय इत्यनेन दोषाभावप्रयुक्ततद्ग्रहणाऽभावो व्यज्यते ।त्वत्प्रियैरिति पाठे तु त्वत्प्रियैस्सहान्तिकस्थान् न नाशयन्तीत्यन्वयः । त्वयि सौहार्दवतः त्वयि उदासीनांश्च न नाशयन्तीत्यर्थः । अथवा त्वत्प्रियैः इत्येतत् जल्पविशे-

षणम्, तव "वृत्त्या पशुः" 'कूराधिनाथ' इति श्लोकद्वयोक्तानुसन्धानवतस्तव प्रियैः इष्टैः, परैरात्मदोषकथनं हि सतामिष्टं भवति, तदुक्तम् "परैर्दोषोक्तिलाभश्चेद्द्वयजीवनलाभिनः" इति ॥ ७७ ॥

अ०—'दीने पूर्णौ' 'त्वत्पदाब्जम्' इति श्लोकाभ्यामिष्टाऽनिष्टप्राप्तिपरिहारौ प्रार्थितौ, तत्र सिंहव्याघ्राविति श्लोकः प्रासंगिकः प्रवृत्तः, अस्मिन् श्लोके वरवरमुनिं प्रति स्वाभिलषितप्रार्थनाया अपि तदीयत्वकाष्ठाभूतं महापुरुषं प्रति तत्प्रार्थना ज्यायसीत्याह—

मू०—त्वद्भृत्यानामनुभजति यस्सर्वतो भृत्यकृत्यं ।
तद्भृत्यानामभिलषति यस्तादृशं प्रेष्यभावम् ॥
मद्भृत्योऽसाविति मयि स चेत्सानुकल्पैरपांगैः ।
क्षेमं कुर्याद्वरवरमुने ! किं पुनश्शिष्यते मे ॥ ७८ ॥

व्या०—त्वद्भृत्यानामिति॥ हे वरवरमुने! यः पुरुषः, त्वद्भृत्यानां चरमशेषिणश्चरमोपायस्य चरमप्राप्यस्य तव पारिजनभूतानाम्, अनेन जन्मवृत्तादिकं नापेक्षितमित्युक्तं भवति सर्वतः सर्वेषामित्यर्थः, कलत्रपुत्रसहितानामित्यर्थः, अथवा भिन्नभिन्नवर्णाश्रमयुक्तानामित्यर्थः, अथवा सर्वत इत्यस्य भृत्यकृत्यमित्यन्वयः । सर्वत इत्यस्य सर्वमित्यर्थः सार्वविभक्तिकस्तसिः, द्वितीयायामपि भवति वाचिकादिरूपं पादसंवाहनादिरूपं वा अथवा सर्वत इत्यस्य सर्वस्मादित्यर्थः । तथा च लोकप्रसिद्धात् सर्वस्मादपि भृत्यकृत्यात् विलक्षणं भृत्यकृत्यम्।सर्वत इत्यस्य सर्वस्मिन्देश इत्यर्थः । इदं सर्वदेशकालादेरप्युपलक्षकम् अनुभजति प्राप्नुवानमनुप्राप्नोति तद्भृत्यानां तस्य भृत्या ये केचित्तेषां



तादृशं प्रेष्यभावम् तदधीनप्रवृत्तिमत्त्वम्, यः अभिलषति अत्यन्तमिच्छति तादृशमित्यनेनोक्तप्रेष्यभावस्य निरतिशयपुरुषार्थरूपता प्रदर्श्यते अभिलषतीत्यनेन तस्य दौर्लभ्यमभिलाषस्यैव पुरुषार्थरूपता तद्वतः परमगौरवञ्च व्यज्यते । सः 'अभिलषति' इत्युक्तमहापुरुषः, मयि असौ मद्भृत्यः इति सानुकम्पैः सदयैः, अपांगैः नेत्राञ्चलैः क्षेमं कुर्याच्चेत् लब्धभवद्विषयप्रावण्यरूपमदीयरक्षणं करोति चेत् मे एवंविधस्य मम पुनः भूयः किं शिष्यते प्रार्थनादिकं न किमपि कर्तव्यतयाऽस्तीत्यर्थः । त्वयि प्रार्थितेऽपि त्वदीयविषयप्रार्थनाशिष्टा त्वदीय एव मम सर्वभरं स्वीकरोति चेत् किं शिष्यत इत्यर्थः त्वद्भृत्यानामित्यत्र त्वद्भृत्यत्वं साक्षात्परम्परया विवक्षितम् अनुभजति अभिलषतीत्याभ्यां प्रथमोक्तभृत्यापेक्षयाऽनन्तरोक्तप्रेष्यभावस्याऽभ्यर्हितत्वं सूच्यते । अत्राऽयमर्थोऽनुसन्धेयः भृत्यानामिति बहुवचनद्वयस्याऽपि कपिञ्जलाधिकरणन्यायेन प्रत्येकं त्रित्वमर्थः तथा च सर्वत्रापि सङ्कलने सचेदित्युक्तः पुरुषः वरवरमुन्यपेक्षया दशमो भवति तं प्रति चाऽनेन भृत्यत्वमनुसंहितं स्वस्मिन्परांकुशेन स्वशेष्यपेक्षया सप्तशेषत्वव्यवहितं शेषत्वं स्वस्मिन्ननुसंहितं भगवद्दिव्यपादुकया च तदप्यन्तर्भाव्य अष्टशेषत्वव्यवहितशेषित्वमाश्रितम् अनेन तु देवराजगुरुणा स्वशेष्यपेक्षया नवशेषत्वव्यवहितशेषित्वमनुसंहितम् अनुभजतीत्यनुशब्देन केवलभजनकर्तुराक्षेपाल्लाभः अतः स चेदित्युक्तस्य दशमत्वासिद्धिः परांकुशभगवत्पादुकयोरुक्तविधत्वञ्च "यस्स[1]प्तपर्वव्यव-

[1] सप्तपर्णोति 'ख' पु० पा० ।

धानतुङ्गां शेषत्वकाष्ठामभजन्मुरारेः । तस्याऽपि नामोद्वहनात्त्वयाऽसौ लघूकृतोऽभूच्छठकोपसूरिः" इति श्लोकेऽनुसन्धेयम् तथा चाऽयं देवराजगुरुः शेषत्वसाम्राज्यविषये विषयव्यवधानाभ्यां परांकुशभगवत्पादुकाऽपेक्षयाऽभ्यर्हिततम इत्यनुसन्धेयम् । विषयो वरवरमुनिरूपचरमशेषिरूपः व्यवधानञ्च शेषत्वनवकव्यवधानरूपम् ॥ ७८ ॥

अ०—स्वस्याऽन्यथाज्ञानादिमत्त्वं वरवरमुनिवरसंश्लेषविश्लेषैकसुखदुःखप्रयोजनहृदयमार्दवञ्च विवृण्वन् वरवरमुनिवरं प्रति स्वस्य बुद्धियोगप्रदानप्रार्थनां निगमयति—

मू०—क्वाऽहं क्षुद्रः कुलिशहृदयो दुर्मतिः क्वाऽऽत्मचिन्ता ।
त्रैयन्तानामसुलभतरं तत्परं क्वाऽऽत्मतत्त्वम् ॥
इत्थम्भूते वरवरमुने ! यत्पुनस्स्वात्मरूपं ।
द्रष्टुं तत्तत्समयसदृशं देहि मे बुद्धियोगम् ॥ ७९ ॥

व्या०—क्वाहमिति ॥ हे वरवरमुने ! क्षुद्रः अत्यन्तविहीनकृत्यतयाऽत्यल्पीयान् कुलिशहृदयः, वज्रवन्निष्ठुरहृदयः दुर्मतिः अन्यथाज्ञानादिपूर्णः अहं क्व कस्मिन् प्रकारे स्थित इत्यर्थः । आत्मचिन्ता देहातिरिक्तात्मस्वरूपनिरूपणम् क्व कस्मिन् प्रकारे स्थितम्, त्रैय्यंतानां वेदान्तानामसुलभम् प्रथमपर्व इदं तु असुलभतरम् अत्यन्तदुर्लभम् तत् तथाविधं वाचामगोचरं महिमवदित्यर्थः परं सर्वविलक्षणम् आत्मतत्त्वम् आत्मनः बुद्धिस्थस्य तव तत्त्वं याथात्म्यं क्व कस्मिन्प्रकारे स्थितम् इत्थम्भूते एवं सति हृदयकाठिन्यादिमतो मम ज्ञातृत्वायोग्यत्वे सति देहात्मवैलक्षण्यस्य दुर्ज्ञेयत्वे च



सति निर्दोषप्रमाणभूतवेदेनाऽपि अशक्यवेदनस्य भवद्याथात्म्यस्यात्यन्तदुर्ज्ञेयत्वे सतीत्यर्थः । यत्पुनः स्वात्मरूपं स्वस्य ममात्मनः भवतश्च रूपं याथात्म्यं चरमशेषित्वादिरूपस्त्वदाकारः चरमशेषत्वादिरूपो मदाकारश्चेत्यर्थः । तदित्यध्याहारः तद्भवत्स्वरूपयाथात्म्यं मत्स्वरूपयाथात्म्यञ्च द्रष्टुं साक्षात्कर्तुम् तत्तत्समयसदृशं देहात्माभिमानकालादिरूपतत्तत्कालानुरूपं बुद्धियोगं भक्त्याख्यं भवत्संश्लेषविश्लेषैकसुखदुःखत्वादिरूपपरमप्राप्यदशापरिकरम् योगं[१] इहोपायः मे एवं विधाय मह्यम् देहीति प्रार्थना ॥ ७९ ॥

अ०—वरवरमुनिसंश्लेषविश्लेषैकसुखदुःखवत्ताप्रयोजकस्य हृदयमार्दवस्याऽभावस्स्वस्मिन्ननुसंहितः अथ तत्सम्भवस्थलं दिदर्शयिषुः प्रथमं स्वकुलधनभूतरघुपतिरेव तादृशमार्दवस्य प्रथमोदाहरणभूमिरित्याह—

मू०—सोढुं तादृग्रघुपरिवृढो न क्षमस्त्वद्वियोगं ।
सद्यः कांक्षन् वरवरमुने ! सन्निकर्षं तवैषः ॥
सायम्प्रातस्तव पदयुगं शश्वदुद्दिश्य दिव्यं ।
मुञ्चन् बाष्पं मुकुलितकरो वन्दते हन्त मूर्ध्ना ॥ ८० ॥

व्या०—सोढुमिति ॥ हे वरवरमुने ! त्वद्वियोगम् अत्यभिमतस्य तव विरहं सोढुं न क्षमः नाऽर्हः । एषः मत्कुलधनतया मद्गेहवासी रघुपतिः सद्यः अस्मिन्नेवाऽह्नि झटितीत्यर्थः । तव क्षणदुस्सहविरहस्य तव सन्निकर्षं समीपावस्थानं कांक्षन्सन् शश्वत् मुहु-

१ "योगस्सन्नहनोपायः" इति कोशः ।

मुहुः बाष्पं मुञ्चन् दुःखाश्रूणि विकिरन्सन् तव पदयुगं द्रविडोपनिषद्भाष्योपदेष्टृतया स्वाचार्यभूतस्य तव श्रीपादयुगलम् उद्दिश्य विषयीकृत्य मुकुलितकरः अञ्जलिभूतकरः सायम्प्रातः मूर्ध्ना वन्दते प्रणमति "स्त्रियो वृद्धास्तरुण्यश्च सायम्प्रातस्समाहिताः। सर्वान्देवान्नमस्यन्ति रामस्यार्थे यशस्विनः" इति सर्वैस्स्वविषये कर्तव्यं देवतोद्देशेन सायम्प्रातः प्रणामं रघुपरिवृढस्त्वद्विषये करोति हन्तेत्यनेनैतादृशमार्द्रत्वं स्वस्मिन्नास्तीति दुःखातिशयो व्यज्यते ॥ ८० ॥

अ०—पूर्वस्मिन् श्लोके त्वद्वियोगं सोढुं रघुपरिवृढः न क्षम इत्युक्तम् इदानीं तस्य वरवरमुनिवियोगप्रयुक्तान्दशाविशेषानाह—

मू०—अन्तस्ताम्यन्रघुपतिरसावन्तिके त्वामदृष्ट्वा।
चिन्ताक्रान्तो वरवरमुने! चेतसो विश्रमाय॥
त्वन्नामैव श्रुतिसुखमिति श्रोतुकामो मुहुर्मां।
कृत्यैरन्यैः किमिह तादिदं कीर्तयेति ब्रवीति॥ ८१ ॥

व्या०—अन्तस्ताम्यन्निति ॥ हे वरवरमुने! असौ मदाराधनभूतो रघुपरिवृढः अन्तिके त्वामदृष्ट्वा समीपे अत्यर्थप्रेमविषयं भवन्तमपश्यन्नित्यर्थः। अन्तः हृदि ताम्यन् ग्लानिमान् "अनिर्विण्णो गभीरत्वादन्तर्गूढघनव्यथः" इत्युक्तरीत्या स्वमात्रसंवेद्यवेदनातिशयवानित्यर्थः। चिन्तक्रान्तश्च सन् नानाकोटिकविपरीतसम्भावनापूर्णस्सन् "याता भवेद्भगवती भवनं सखी नो जीवत्यथैष्यति न वेत्यभिशंकितोऽस्मि" इत्युक्तबहुप्रकारविपरीतसम्भावनावांश्च सन्नित्यर्थः। चेतसः उक्तविधदुःखेनात्यायासवतो हृदयस्य विश्रमाय किञ्चिदाया-

१ परिवृढः परब्रह्म 'ब्रह्मपरिवृढंसर्वतः' इतियास्कः ( पा० १३-३ )



सनिवृत्तये त्वन्नामैव अत्यर्थाभिमतस्य तव दिव्याभिधानमेव एवकारेण वाग्वृत्यन्तरव्युदासः नामेति च द्वितीयान्तम्। श्रोतुकाम इत्यत्रान्वेति श्रुतिसुखमिति "मद्वक्त्रतस्तव गुणानभिशृण्वतश्च प्रत्यक्षरं पुलकजालिकपोलमूलम्" इत्युक्तरीत्या सौख्यातिशयहेतुत्वाद्धेतोः इति हेतौ श्रोतुकामः आकर्णितुमत्यन्तमपेक्षमाणस्सन्नित्यर्थः। इह अभिमतजनविश्लेषेणात्यार्ते मद्विषये, अन्यैः कृत्यैः वरवरमुनिवरदिव्याभिधानव्यतिरिक्तैः कृतिसाध्यैः, कृत्यैरित्यनेन सिद्धरूपस्य स्वरूपादेरशक्यनिवर्तनत्वेन दुःखासहननियतत्वं व्यज्यते किं न किमपीत्यर्थः, विरहार्त्तस्य ममाऽशनाऽऽसनादिव्यापारान्तराणि विरहविनोदनान्यपि न भवन्ति, अभिमतसमागमरूपाणि अपि न भवन्तीत्यर्थः। तत् तस्मात्त्वत्कृतार्घ्यपाद्यादेरकिञ्चित्करत्वादित्यर्थः। इदं ममाऽनवरतबुद्धिस्थं वरवरमुनिवरदिव्याभिधानं कीर्तयेति संशब्दयेति, तदाराधने प्रवृत्तं भ्रुकुटीभटं मां मुहुः ब्रवीति असकृद्वदति, मुहुरित्यनेन वरवरमुनिदिव्याभिधानकीर्तनेऽत्यादरो व्यज्यते।इदमित्येकवचनेन एकवारं तत्कीर्तनमपि प्राणप्रतिष्ठापनमिति व्यज्यते। अन्तस्ताम्यन्नित्यनेन ग्लानिर्नामसञ्चारीभाव उक्तः यथोक्तम् "ग्लानिर्भयस्याऽपचयाऽवैवर्ण्याऽरतिकारणम्" इति। चिन्ताक्रान्तमित्यनेन शङ्कानामसञ्चारीभाव उक्तः। यथोक्तम्, "अनिष्टागमनोत्प्रेक्षा शंकाद्वेषादिकारणम्" इति चेतसो विश्रामयेत्यनेन श्रमोनाम संचारीभाव उक्तः।यथोक्तम् "श्रमः खेदोध्वरत्यादेर्जातस्वेदादिभूमिकृत्" इति चिन्ताक्रान्त इत्यनेन चिन्तावाससंचारीभाव उक्तः। यथोक्तम् "इष्टाऽनभिगमाद्धयानं चिन्ताशून्यत्वतापकृत्" इति कृत्यैरन्यैः

किमित्यनेनाऽरतिर्नामावस्थोक्ता उक्तञ्च "अन्यत्राऽप्रीतिररतिः" इति अत्रेष्टजनवियोगजन्यदुःखातिशयरूपस्य करुणारसस्य निबन्धनात् तदनुबन्धिनो भावा निबद्धाः ॥ ८१ ॥

अ०—त्वद्वियोगे त्वन्नामैवेत्यभिप्रेतं वरवरमुनेर्भगवदत्यन्ताभिमतत्वं विवृण्वन् तद्वियोगाऽक्षमत्वं रघुकुलपतेर्द्रढयति—

मू०—भुंक्ते नैव प्रथमकवले यस्त्वया नोपभुक्ते।
निद्रा नैव स्पृशति सुहृदं त्वां विना यस्य नेत्रे ॥
हीनो येन त्वमसि सलिलोत्क्षिप्तमीनोपमानः।
कोऽसौ सोढुं वरवरमुने ! राघवस्त्वद्वियोगम् ॥८२॥

व्या०—भुंक्त इति ॥ हे वरवरमुने ! यः रघुपतिः प्रथमकवले त्वया सौमित्रिरूपेण भवता, नोपभुक्ते सति समीपभुव्यभुक्ते सतीत्यर्थः न शब्दस्योपभुक्तशब्देन समासः नभुंक्त एव नाऽभ्यवहरत्येव, सुहृदम् स्निग्धं त्वां विना यस्य अनुरक्तभूतभवद्विरहितस्य यस्य, विना शब्दो सहार्थवाची यस्य निद्रा नेत्रे दृशौ नैव स्पृशति न किंचिदपि सम्बध्नात्येवेत्यर्थः। निद्राया हि नेत्रेण निमीलनादिद्वारा व्यंग्यव्यंजकभावसम्बन्धोऽस्ति स स्वल्पोऽपि इह नास्तीत्यर्थः। येन हीनस्त्वम् येन रघुपतिना रहितस्त्वम्, सलिलोत्क्षिप्तमीनोपमानस्सन् सलिलात् जलात्, उत्क्षिप्तस्य मीनस्य मत्स्यस्य। उपमानं सादृश्यं यस्य तथाविधोऽसि उपमितिरुपमानम्, भावे ल्युट् समानाधिकरणे बहुव्रीहिः अत्र हीनशब्दः प्रसज्यमानविश्लेषपरः मीनोपमानत्वमपि प्रसज्यमानं विवक्षितम्। अथवा यथाश्रुतमेव भवतु



"परित्यजे त्वां सौमित्रे माभूत्तस्य विपर्ययः। त्यागो वापि वधोवाऽपि साधूनामुभयं समम्" इत्युत्तरत्र शरीरत्यागकथनात् मीनोपमानत्वं चेह मीनवदुद्धारोत्तरक्षणमेव स्फुरणम् यावदार्द्रभावं कथञ्चित्प्राणधारणमपि विवक्षितम् असौ एवंविधो राघवः त्वद्वियोगम् एवंविधस्य तव विश्लेषं सोढुं कः कीदृशः विषयान्तरप्रवणावयमपि न, प्रतिकूला रावणादयोऽपि न तस्मात् सोढुं नार्हतीत्यर्थः। अत्र भुंक्ते नैवेत्यत्र "मृष्टमन्नमुपानीतमश्नाति न हि तं विना" इत्येतदनुसन्धेयम् निद्रा नैवेत्यत्र "न च तेन विना निद्रां लभते पुरुषोत्तमः" इत्येतद्द्रष्टव्यं सुहृदमित्यत्र "बाल्यात् प्रभृति सुस्निग्धः लक्ष्मणो लक्ष्मिवर्द्धनः" इत्येतद्द्रष्टव्यम् हीनो येनेत्यत्र "न च सीता त्वया हीना न चाऽहमपि राघव। मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ" इत्येतद्द्रष्टव्यम् ॥ ८२ ॥

अ०—स्वतो भोग्यताशून्यमपि तत्तद्वस्तुजातं वरवरमुनिवरावतारविशेषभूतसौमित्रिसम्बन्धवशात् अत्यन्तभोग्यमभूदित्यतस्तस्मिन् भगवतोऽत्यन्ताऽभिमतमाह—

मू०—पत्रं मूलं सलिलमपि यत्पाणिनोपाहृतं ते।
मात्रा दत्तादपि बहुमतं पत्युरेतद्रघूणाम् ॥
शाखागेहं समजनि विभोः सम्मतं सौधशृंगं।
भूत्वा वासो महदपि वनं भोगभूमिस्त्वयाऽभूत् ॥८३॥

व्या०—पत्रमिति ॥ हे वरवरमुने इति पूर्वस्मात् अनुषंगः ते पाणिना अत्यन्ताभिमतस्य तव हस्तेन, उपाहृतम् आनीतं यत् पत्रं

मूलं सलिलमपि, अपिशब्दात् मांसादिकं समुच्चीयते एतत् रघूणां पत्युः रघुकुलपतेः, मात्रा दत्तादपि अत्यन्तप्रीतिमत्या कौसल्यया उपाहृतादपि, बहुमतम् अत्यन्ताऽभिमतविषयीभूतम्, अभूदित्याकर्षः। शाखागेहं त्वत्कृता पर्णशाला त्वया हेतुना विभोस्सम्मतं सौधशृंगम् समजनि—आसीत्, महदपि वनम् अत्यन्तभयङ्करं दण्डकारण्यमपि, वासो भूत्वा वासभूमितां प्राप्य त्वया हेतुना विभोर्भोगभूमिरभूत् भोगविभूतिभूतं श्रीवैकुण्ठनगर्यभूदित्यर्थः। अत्र पत्रं मूलं सलिलमपीत्यत्र "जलमेवाददे भोज्यं लक्ष्मणेनाऽऽहृतं स्वयम्" इत्यादिकं द्रष्टव्यम् "रमणीयान्बहुविधान् पादपान्कुसुमोत्कटान्। सीतावचनसंरब्ध आनयामास लक्ष्मणः" इति च "राघवः पर्णशालायां हर्षमाहारयत्परम्। सुसंहृष्टः परिष्वज्य बाहुभ्यां लक्ष्मणं तथा। अतिस्निग्धञ्च गाढञ्च वचनञ्चेदमब्रवीत्। प्रीतोऽस्मि ते महत्कर्म त्वया कृतमिदं प्रभो। प्रदेयो यन्निमित्तस्ते परिष्वंगो मया कृतः। भावज्ञेन कृतज्ञेन" इत्यारभ्य "तस्मिन्देशे बहुफले" "न्यवसच्च सुखी" इत्यादिकमपि भाव्यम्। इष्टजनसमागमे हि बहुदुःखकरमपि वनं सुखप्रकर्षहेतुरिति व्यञ्जितम्, सीतया "एतत्तु वचनं श्रुत्वा रामस्य तु सुदुःखिता। प्रसक्ताश्रुमुखी मन्दं वचनञ्चेदमब्रवीत्। ये त्वया कीर्तिता दोषा वने वस्तव्यतां प्रति। गुणा इत्येव तान्मन्ये तव स्नेहपुरस्कृता" इति "कुशकाशशरेषीका ये च कण्टकिनो द्रुमाः। तृणलाजिनसंस्पर्शा मार्गे मम सह त्वया। महावातसमुद्भूतं यन्मामवकरिष्यसि। रजो रमण तन्मंस्ये पारार्थ्य-



मिव चन्दनम्" इति चोक्तत्वात् "अधिकं पुरवासाच्च" "जहौ च दुःखम्पुरविप्रवासात्" इति च व्यक्तमनुसन्धेयम्॥ ८३॥

अ०—"भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते। अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते" इत्यत्र सर्वपदाभिप्रेतान् परिचरणविशेषान् लक्ष्मणत्वे वरवरमुनिना कृताननुसन्धत्ते—

मू०—अध्वश्रान्तिं हरसि सरसैरार्द्रशाखासमीरैः।
पादौ संवाहयसि कुरुषे पर्णशालां विशालाम्॥
भोज्यं दत्वा वरवरमुने! कल्पयन् पुष्पशय्यां।
पश्यन्धन्यो निशि रघुपतिं पासि पत्नीसहायम्॥ ८४॥

व्या०—अध्वश्रांतिमिति॥ अत्र त्रिष्वपि पादेषु रघुपतिं पत्नीसहायम् इत्यनयोराकृष्टयोः षष्ठ्या विपरिणामः। हे वरवरमुने! सरसैः पुष्परससहितैः आर्द्रशाखासमीरैः शीतलसलिलक्लिन्नचम्पकवकुलादिशाखाप्रयुक्तमृदुलवातैः अग्रशाखासमीरैः इति पाठे किसलयप्रचुरत्वमग्रपदाभिप्रेतं मन्तव्यम्। सरसैरार्द्रैति सौरभ्यं शैत्यञ्चोक्तम्, बहुवचनेन मान्द्यं विवक्षितं प्रत्येकं श्रमापनयनासामर्थ्यावगमात् पत्नीसहायस्य रघुपतेर्जनककुलसुन्दरीसहितस्य दाशरथेः अध्वश्रान्तिं मार्गगमनायासं हरसि अपगमयसि "यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना" इत्युक्तरीत्या परस्परसाहित्येन परस्पर ( योः ) श्रान्तिप्रसक्त्यभावेऽपि परस्परश्रान्तिशंकया परस्परस्य श्रान्तिरविरुद्धा हरसि इत्यात्मनेपदप्रयोगाऽभावेन परिचरणस्य स्वार्थताराहित्यपरार्थत्वं व्यज्यते "कुरुष्व मामनुचरम्" इति परमोपक्रमे कर्तृ-

गामिक्रियाफलपरस्यात्मने पदस्य प्रयुक्तत्वात् त्रेतायां[1] त्वत्कृतात्यर्थ-सौख्यहेतूपचारविशेषा आफलान्तसलिलसेकवदद्यापि भगवतो धारका इति वर्तमाननिर्देशेन व्यज्यते । उपचरणीयत्वे सामरस्याऽभिप्रायकः पत्नीशब्दः "पत्युर्नोयज्ञसंयोग" इत्यनुशासनम् संयोगः फलसंयोगरूपाख्या विशेषा (भेदा) दित्यादौ तथा दर्शनात् अत एवोत्तरखण्डार्थकैंकर्यप्रतिसम्बन्धित्व एव दम्पत्योस्तुल्यत्व मनुगृहीतं पूर्वाचार्यैः पत्नीसहायस्य रघुपतेः पादौ संवाहयसि जानक्या दाशरथेश्च पादौ गमनप्रयुक्तखेदनिवर्तकं यथा तथा दृढं निपीडयसीत्यर्थः । करेणेत्यनुक्तिस्तु अतिसुकुमारचरणकिसलयसंवाहने लक्ष्मणकरकिसलयस्यासद्भूतस्येव करणत्वं द्योतयितुमिति मन्तव्यम् । अत्राऽपि परस्मैपदेन पारार्थ्यं व्यज्यते पत्नीसहायस्य रघुपतेः विशालां पर्णशालां कुरुषे विशालामित्यनेन देवतायतनाऽग्निशरणा[2]दिसंविभागः केलिगृहादिसंविभागश्च कृत इति व्यज्यते "भावज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण । त्वया पुत्रेण धर्मात्मा न संवृत्तः पिता मम" इति श्लोके भावज्ञेनेत्यत्राऽभिप्रेतोऽर्थः । विशालामित्यनेनोक्तः त्वया मम पिता न संवृत्तः इत्यत्राऽभिप्रेतोऽर्थः कुरुष इत्यत्र कथितः पित्रा हि पुत्रविषये क्रियमाणमुपचारादिकं पित्रर्थमेव भवति पितुः पुत्रं प्रति शेषित्वात् अतः कर्तुः क्रियाफलभाक्त्वसूचकेनात्मनेपदेन क्रिया-

१ त्रेताद्वापरयोर्मध्ये किल रघुनाथस्याऽवतारः तथा शेषसंहितादिषूक्तेः ।
२ शरणंगृहरक्षित्रोरिति कोशः ।



फलभाक्त्वप्रयोजकपितृत्वपरस्य न संवृत्तः पिता ममेत्यस्य वाक्यस्यार्थः सूचितः भावज्ञेनेति श्लोकस्य पर्णशालाप्रकरणस्थत्वात् अत्र पर्णशालां कुरुषे इत्यात्मनेपदंप्रयुक्तम् । पत्नीसहायस्य रघुपतेः भोज्यं दत्वा जनककुलसुन्दरीसहितेन रघुपतिना भोजनार्हफलमूलादिकमुपहृत्य स्वस्वत्वनिवृत्तिपूर्वकत्वघटितमुख्यदानस्या(त्रा) सम्भवादुपहरणमात्रपरो दत्वेति शब्द इति रघुपतेरिति षष्ठ्यन्तान्वयसम्भवः पुष्पशय्याम् पुष्पमयशयनम् कल्पयन् निर्मिमाणस्सन् यथा दम्पत्योरसम्बाधेन शयितव्यं तथा कल्पयन्नित्यर्थः । वर्तमानेन पदेपदे ग्लानपरिहारेणा ग्लानपुष्पशयनकल्पनं व्यज्यते । निशि रात्रौ पत्नीसहायं रघुपतिं पश्यन् अनिमिषेण लोचनेन निरीक्षमाणस्सन् धन्यः सन् स्वकृतपरिचरणाङ्गीकारात्मकमहाधनलाभवान्सन्नित्यर्थः । पासि रक्षसि, धनुर्धरस्सन् अप्रमत्तो गुहादिष्वप्यतिशंकया रक्षसीत्यर्थः । अत्र श्लोके पादत्रयेण "अहं सर्वं करिष्यामि" इत्यर्थ उक्तः निशि रघुपतिमित्यादिना च स्वपतोऽहं सर्वं करिष्यामीत्यर्थ उक्तः । अत्र पुष्पशय्यां कल्पयन् इत्यन्तेन पश्यन्नित्यन्तेन च "परमप्रयोजनप्रवृत्तिः प्रयत्नफलम् तद्विषयप्रीतिश्चैतन्यफलम्" इत्यनयोर्वाक्ययोरर्थस्स्मारितः । धन्य इत्यनेनाऽप्राप्तविषयजनसंवाहनादिकं कुर्वतो राजान्तरस्याऽधन्यत्वं व्यज्यते उक्तश्च दुष्यन्तेन "किं शीतलैः क्लमविनोदिभिरार्द्रवातान्सञ्चारयामि नलिनीदलतालवृन्तैः । अंके निधाय करभोरु यथासुखं ते संवाहयामि चरणावुतपद्म ताम्रौ" इति 'धनगणं लब्धा' इति सूत्रेण धनलाभवति धन्यशब्दो व्युत्पादितः निशि पत्नीसहायं

रघुपतिं पश्यन् धन्य इत्यनेन "अहं पुनर्देवकुमाररूपं स्वलंकृतं तं सुतमाव्रजन्तम् । नन्दामि पश्यन्नपि दर्शनेन भवामि दृष्ट्वा च पुनर्युवेव" इत्युक्तदशरथादपि वैलक्षण्यं व्यज्यते, रघुपते-र्भोज्यमिति अर्हार्थे यप्रत्ययेन "यदन्नः पुरुषो भवति तदन्ना-स्तस्य देवताः" इत्युक्तनिर्बन्धो व्यावर्त्यते. ईदृशो लक्ष्मणस्य रघु-पतौ भावबन्धः यथोक्तं लक्ष्मणेन "अनुरक्तोऽस्मि भावेन भ्रातरं देवि! तत्त्वतः। सत्येन धनुषा चैव दत्तेनेष्टेन ते शपे ॥ दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति ॥ प्रविष्टं तत्र मां देवि ! त्वं पूर्वमवधारय" इति स्वकरणकलेबरादेस्सर्वदा ( सर्वथा ) भगवदेकविनियोगार्हत्व-मपि तेनैवोक्तं यथा "अद्य चन्दनसारस्य केयरामोक्षणस्य च । वसू-नाञ्च विमोक्षस्य सुहृदां पालनस्य च । अनूकूलाविमौ बाहू रामकर्म कारिष्यतः" इति एवं "ततश्चिरोत्तरासङ्गसन्ध्यामन्वास्य पश्चिमाम् । जलमेवाऽऽददे भोज्यं लक्ष्मणेनाऽऽहृतं स्वयम् । तस्य भूमौ शयानस्य पादौ प्रक्षाल्य लक्ष्मणः" इत्यादि तं जाग्रतमित्यादि च द्रष्टव्यम् ॥ ८४ ॥

अ०—एवं द्वाभ्यां श्लोकाभ्यां कायिकीपारिचर्योक्ता; अथ वाचिकमाह—

मू०—पश्यन्नग्रे परिमितहितस्निग्धवाग्वृत्तियोगं ।
सद्यः शोकप्रशमनपरं सान्त्वयन्तं भवन्तम् ॥
प्राज्ञो जज्ञे स खलु भगवान्दूयमानो वनान्ते ।
पश्चात्कर्तुं वरवरमुने ! जानकीविप्रयोगम् ॥ ८५ ॥



व्या०—पश्यन्निति ॥ हे वरवरमुने ! भगवान् ज्ञानादिपूर्णः सः सीतावियुक्तरघुपतिः दूयमानस्सन् जानकीविप्रयोगप्रयुक्तपरिताप-वान्सन्,परिमिता विनयगौरवाभ्यां सत्याय च स्तोका हिता अनुकूलो-दर्का हिता।स्निग्धा स्नेहयुक्ता स्नेहहेतुके स्नेहाश्रयत्वोपचारः भोग्यता तिशयव्यञ्जनार्थः वाग्वृत्तिरेव वाग्व्यापार एव योगः विरहविनो दनोपायः यस्य तथोक्तस्तं, "योगः सन्नहनोपायः" इति कोशः । सद्यः शोकातिरेकोत्पत्तिक्षण एव, शोकस्य सीतावियोगजन्यदुःखस्य प्रशमनं प्रकर्षेण निवर्तनं परं सर्वस्मादपि व्यापारादभिमतं यस्य तथोक्तस्तं सान्त्वयन्तं स्वविषयकात्यर्थमधुरवचनानि वदन्तं भवन्तं त्वाम् अग्रे पुरतः पश्यन्वनान्ते वनसीम्नि, जानकीविप्रयोगम् अत्यर्था-भिजातजनककुलसुन्दरीविश्लेषं पश्चात्कर्तुं लंघयितुं प्राज्ञो जज्ञे खलु निपुणो जातः किल अत्र परिमितेत्यादिविशेषणेनाऽनिष्टनि-वृत्तिविषयकोपन्यासमाधुर्यमुक्तं सान्त्वयन्तमित्यनेनेष्टप्राप्तिविषयको-पन्यासमाधुर्यमुक्तम् अतो रावणो हतः सीता प्राप्तेत्याकारकप्रति-पत्तिजननात् त्वया जानकीविप्रयोगो रघुपतिना सोढ इति भावः । युक्तश्चैतत् "चिरनिवृत्तमप्येतत्प्रत्यक्षमिव दर्शितम्" इति चिरातीत-वृत्तान्तस्य वर्तमानमिवाऽवभानं प्रतिपादकसौभाग्यायत्तश्चेत् भाविनोऽपि तस्य तथाभावनस्य न्याय्यत्वात् तदुक्तम् "आश्वासितो लक्ष्म-णेन" इत्यारभ्य "स्मरन्कमलपत्राक्षीं रामस्सन्ध्यामुपासते" इति ! प्रकर्षेण जानातीति प्रज्ञः, प्रज्ञ एव प्राज्ञः, ज्ञाने प्रकर्षश्च तदनुगुण-शक्तियोगरूपयोगः अतो निपुणोभूदिति फलितम् ॥ ८५ ॥

अ०—पूर्वस्मिन् श्लोके भ्रातुर्विरहव्यथासमाश्वासनादिरूपा वाचिकी परिचर्योक्ता; अस्मिन् श्लोके तत्कार्यसिद्ध्यर्थान्यविषयवाग्वृत्तिरूपा परिचर्योच्यते—

मू०—सुग्रीवो नश्शरणमिति यत्सूनृतं भ्रातुरर्थे।
पम्पातीरे पवनजनुषा भाषितं शोभते ते॥
कालातीते कपिकुलपतौ देव तत्रैव पश्चा—
च्चापं धून्वन्वरवरमुने यद्भवान्निग्रहेऽभूत॥ ८६॥

व्या०—सुग्रीव इति॥ हे वरवरमुने! पम्पातीरे पम्पाभिधानसरोरोधसि पवनजनुषा हनुमता सह यत् 'भाषितम्' इत्यत्रान्वेति सूनृतं मधुरं सत्यञ्च, सुग्रीवो नश्शरणमिति भ्रातुरर्थे यत् भाषितं मम च राघवस्य च सुग्रीव एवाऽनिष्टनिवृत्तौ चेष्टप्राप्तौ च निरपेक्षोपाय इति एतदर्थफलकम् "अहञ्चैव हि रामश्च सुग्रीवं शरणं गतः" इत्याकारकं भ्रातृप्रयोजनैकस्वप्रयोजनकं यद्वचनं ( भाषितम् ) न इति "अस्मदोर्द्वयोश्च" इति द्वित्वे बहुवचनं कालातीत इत्यादि भवान्त्वम्, अत्र यदित्यनुवर्तते यच्च कपिकुलपतौ त्वदीयपुरुषकारभावप्रापितकपिराज्यवति सुग्रीवे कालं रावणवधार्थसेनासन्नाहाद्यर्थप्रतिज्ञातवार्षिकमासोत्तरकालात्मककालम्, अतीते अतिक्रान्ते सति चापं धून्वन्, धनुर्ज्याशब्दं कुर्वन्,तत्रैव तथाऽभिमतसुग्रीवविषय एव, पश्चात् अनन्तरम्, निग्रहे वधपर्यन्तदण्डाय अभूत् आसीः। निग्रह इति फलस्यैवाऽधिकरणविवक्षया सप्तमी तदुभयम् ते शोभते भ्रातृप्रयोजनैकप्रयोजनस्य तवौज्ज्वल्यकरं भवतीत्यर्थः।देवेत्यनेन तदुचितमाहात्म्यमुच्यते।सुग्रीवो नश्शरणमित्यत्र"एष दत्वा च वित्तानि प्राप्य चानुत्तमं यशः। लोकनाथः पुरा भूत्वा सुग्रीवं नाथ मिच्छति॥ यस्य प्रसादे सततं प्रसीदेयुरिमाः प्रजाः। स रामो वानरेन्द्रस्य प्रसादमभिकाङ्क्षते॥" इत्यादिकं द्रष्टव्यम्। कालातीत इत्यत्र "रोषवेगप्रतपितः श्रुत्वा चाऽभरणध्वनिम्। चकार ज्यास्वनं वीरो दिशश्शब्देन पूरयन्" इति "मासांश्च चतुरः कृत्वा प्रमाणं प्लवगेश्वरः। व्यतीतस्तान्मदव्यग्रो विहरन्नावबुद्ध्यते" इति "कृतत्वं नाभिजानीषे रामस्याऽक्लिष्टकर्मणः। सद्यस्त्वं निशितैर्बाणैर्हतो द्रक्ष्यसि वालिनम्" इत्यादिकञ्च द्रष्टव्यम्॥ ८६॥



अ०—वरवरमुनेश्चरमशेषित्वरूपंचरमोपायत्वरूपञ्च स्वरूपयाथात्म्यं रघुपरिवृढावैन्द्रव्याकरणपण्डितमुखेन[1] जनककुलसुन्दरीसन्देशोक्तिं प्रमाणयन् विशदयति—

मू०—यस्मिन्प्रीतिं मदभिलषितामार्यपुत्रो विधत्ते।
येनोपेतः स्मरति न पितुस्सोऽतिवीरो गतिर्मे॥
इत्येवं त्वां प्रति रघुपतिप्रेयसी सन्दिशन्ती—
व्यक्तं देवी वरवरमुने तत्त्वमाह त्वदीयम्॥ ८७॥

व्या०—यस्मिन्निति॥हे वरवरमुने! आर्यपुत्रः मम भर्ता रघुपतिः आर्यपुत्र इति स्त्रीभिर्भर्तृव्यपदेशः। आर्य इति श्वशुर उच्यते, तस्य पुत्रो भर्ता मदभिलषितां मयाऽभिलषितां प्रीतिं स्नेहविशेषम्,यस्मिन्

---

१ ऐन्द्रव्याकरणपण्डितो हनुमान्।

यादृशलक्ष्मणे विधत्ते विदधाति । स्वप्रयोजनत्वेन करोतीत्यर्थः "न चास्य माता न पिता न चान्यस्स्नेहाद्विशिष्टोस्ति मया समो वा" इत्यूक्तरीत्या सर्वातिशायिप्रीतिमत्त्वं जनककुलसुन्दर्यां रघुपतेः प्रसिद्धं तत्प्रीतेरतिशयितां प्रीतिं यद्विषये करोतीत्यर्थः । आर्यपुत्रः येनोपेतस्सन् येन लक्ष्मणेन सहितस्सन् पितुः न स्मरति "न संवृत्तः पिता मम" इत्युक्तरीत्या दशरथविषयकस्मृतिमान्न भवतीत्यर्थः । पितुरिति कर्मत्वार्थे षष्ठी अतिवीरः सः रघुपरिवृढाऽपेक्षया प्रकृष्टशौर्यादिगुणवान् भगवत अत्यर्थप्रीतिविषयस्सौमित्रिः मे भगवतोऽत्यर्थाभिमतिविषयभूताया मम गतिः शरणम् । इति उक्ताकारेण एवमुक्तप्रकारेण च त्वाम्प्रति सौमित्रिरूपत्वदुद्देशेन सन्दिशन्ती ऐंद्रव्याकरणपण्डितमुखेन वाचकोक्तिं वदन्ती देवी अयोनिजत्वेनाऽतिरोहिताऽप्राकृताकारा रघुपतिप्रेयसी रघुपतेः प्राणेभ्योपि प्रियतमा जनककुलसुन्दरी त्वदीयन्तत्त्वम् भगवदत्यर्थप्रीतिविषयान्प्रतिशेषित्वशरण्यत्वरूपभवत्स्वरूपयाथात्म्यं व्यक्तमाह स्फुटं प्रतिपादयति स्म अत्र "मत्तः प्रियतरो नित्यं भ्राता रामस्य लक्ष्मणः । राघवस्त्वत्समारम्भान्मयि यत्नपरो भवेत्" इत्यादिकमनुसन्धेयम् । भगवत्प्रीत्युपायकत्वैकवेषस्य चेतनस्य तरतमभावेन भगवदभिमतविषयेषु पूर्वपूर्वपर्वापेक्षयोत्तरोत्तरपर्वविषयेषु प्रीतेरतिशयितत्वेन तद्विषयकैंकर्यंचेतनस्य स्वरूपानुरूपमिति कैंकर्यप्रतिसम्बन्धित्वरूपं शेषित्वं भगवत्प्रीतिविशेषविषयत्वनिबन्धनमिति "मत्तःप्रियतरः"इत्यनेन शेषित्वलाभः "राघवस्त्वत्समारम्भान्मयि यत्नपरो भवेत्" इत्यनेन शरण्यत्वलाभः



देवीत्यनेन वक्तृदोषभूतानां भ्रम[1]प्रमादविप्रलम्भ[2]ादीनां विरहो व्यञ्जितः ॥ ८७ ॥

अ०—अतिवीर इत्यत्रोक्ताऽतिवीरकृत्यं दर्शयन्विरोधिनिरसनरूपं कायिकपरिचरणमाह—

मू०—बाणैर्यस्य ज्वलनवदनैर्वाहिनी वानराणां
वात्यावेगभ्रमितजलदस्तोमसाधर्म्यमेति ॥
सोऽयं भग्नो वरवरमुने ! मेघनादश्शरैस्ते
रक्षोनाथः कथमितरथा हन्यते राघवेण ॥ ८८ ॥

व्या०—बाणैरिति ॥ हे वरवरमुने ! वानराणां 'वाहिनी तेषु संख्या न विद्यते, इत्युक्तरीत्याऽसंख्येयानाम् "एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम्" इत्युक्तरीत्या प्रत्येकं लंकाप्रधर्षणसमर्थानां सुग्रीवप्रभृतीनां कपीनां वाहिनी सेना प्राधान्यं षष्ठ्यर्थः।वानरप्रधाना सेनेत्यर्थः।तेन भल्लूकादेरपि संग्रहः।ज्वलनवदनैः ज्वलनःज्वालायुक्तो वह्निर्वदनेषु अग्रेषु येषां तथोक्तैः । यस्य "किं प्रशंससि रावणिम्" इत्युक्तरीत्या प्रकृष्टतमशौर्यादिमत्त्वेन प्रसिद्धस्य मेघनादस्य बाणैर्वात्यायाः वातसमूहस्य वेगेन भ्रमितानां मण्डलाकारेण चलितानां जलदानां मेघानां स्तोमस्य संघातस्य साधर्म्यं साम्यम् एति प्राप्नोति । चिरातीतमपि इन्द्रजित्प्रयुक्तं वानराणां व्यसनं भगवद्विषयेऽत्यर्थप्री

१ भ्रमः अन्यथाज्ञानम्, प्रमादः अनवधानम्, विप्रलम्भः बुद्धिपूर्वकपरभ्रमोत्पादनरूपवञ्चनम्, आदिशब्दस्तु अशक्तिसंग्रहपरः, अशक्तिः करणापाटवम् ।
२ विप्रलिप्सादीनामित्यपि पाठः ।

तिमताऽनेन ग्रन्थकारेण श्रीरामायणादवगम्यमानं वर्तमानवदनुभूयत इति वर्तमाननिर्देशेन व्यज्यते। प्रसिद्धश्चाऽयं भगवति कुलशेखरे। सः तथाविधः अयं स्मर्यमाणोऽपि मम वर्तमानवदवभासमानः मेघनादः उत्पत्तिक्षण एव मेघनादवन्निनादाद्धेतोः मेघनाद इति पित्रा कृत नामधेयइन्द्रजित् ते शरैः सौमित्र्यवतारस्य तव बाणैः भग्नः आमर्दित इति यत्। इतरथा इतोऽन्येन हेतुना, तत्कृतेन्द्रजिद्वधातिरिक्तेन कायिकेन हेतुना रक्षोनाथः रावणः, राघवेण कथं हन्यते इदानीमस्माभिः स्मर्यमाणराघवकर्तृकवधकर्मीभवेत् "रावणेर्हि जयेनाऽद्य जितमित्युपधारय" इत्यादिकं द्रष्टव्यम् ॥ ८८ ॥

अ०—प्रतिकूलजननिवर्तनरूपकायिकपरिचरणादपि दिव्यमङ्गलविग्रहविषये परिचर्यारूपशेषवृत्तिः प्रकृष्टेति व्यञ्जयितुं परिचरणरूपां शेषवृत्तिं पुनरप्यनुसन्धत्ते—

मू०—पृथ्वीं भित्वा पुनरपि दिवं प्रेयसीमश्नुवानां
दृष्ट्वा श्रीमद्वदनकमले दत्तदृष्टिः प्रसीदन् ॥
प्रेमोदग्रैर्वरवरमुने ! भृत्यकृत्यैस्त्वदीयै-
र्नीतः प्रीतिं प्रतिदिनमसौ शासिता नैर्ऋतानाम् ॥ ८९ ॥

व्या०—पृथ्वीमिति ॥ हे वरवरमुने ! नैर्ऋतानां शासिता रावणप्रभृतीनां राक्षसानां वधप्रयोजकः रघुपतिः पृथ्वीं भित्वा "तथा मे माधवी देवी विवरं दातुमर्हति" इत्युक्तरीत्या पृथिव्या

१ दिव्यसूरिचरितादिषु द्रष्टव्यम्।



विवरं लब्ध्वा, दिवं परमाकाशं पुनरपि अश्नुवानां पूर्ववत्परमाकाशसम्बन्धवतीम्, अथवा पुनरपि पृथ्वीं भित्वेत्यन्वयः। जननकालवन्निर्याणकालेऽपि भूभेदनं कृत्वेत्यर्थः। प्रेयसीं प्राणेभ्योऽपि प्रियतमां जानकीं दृष्ट्वा प्रत्यक्षं ज्ञात्वा, श्रीमद्वदनकमले दत्तदृष्टिः "लक्ष्मणो लक्ष्मिसम्पन्नः" इत्युक्तरीत्या प्रशस्तकैंकर्यसाम्राज्यलक्ष्मीयुक्तस्य तव, वदनकमले कमलवद्भोग्यभूतवदने, न्यस्तचक्षुस्सन्, प्रसीदन् जनककुलसुन्दरीविश्लेषप्रयुक्तक्षोभं मुञ्चन्। प्रेमोदग्रैः अनुरागातिशयेन हेतुनाऽनवधिकैः, त्वदीयैर्भृत्यकृत्यैः क्रयविक्रयार्हदासाऽसाधारणपरिचरणरूपत्वदीयबहुव्यापारैः प्रतिदिनं प्रीतिं नीतः। जनककुलसुन्दर्या सह स्थितिदशायां या प्रीतिः तां प्रीतिं प्रापित इत्यर्थः। धैर्यप्रतिष्ठापनरूपस्वीययत्किञ्चिद्व्यापारेण शून्यत्वं रघुपतेर्नीत इत्यनेन व्यवच्छिद्यते दृष्ट्वेत्यनेन पूर्वविश्लेषाऽपेक्षया दुःखभूयस्त्वं व्यज्यते। पूर्वं ह्यस्मदसन्निधानात्सीताविश्लेषस्संवृत्त इति कथञ्चिदाश्वास्येत; अयंत्वपरोक्षो विश्लेषः। दुःसह इत्येवंविधं दुःखमपि त्वया रघुपतेर्विस्मारितमिति भावः ॥ ८९ ॥

अ०—एवं सौमित्रिरूपवरवरमुनिवरसमागमे भगवतो निरतिशयानन्द उक्तः, अथ तद्व्यतिरेके निरतिशयदुःखमाह—

मू०—सोदर्येषु त्वमसि दयितो यस्य भृत्यस्सुहृद्वा।
सोढव्योऽभूत्त्वयि सहचरे जानकीविप्रयोगः ॥
ध्यायन्ध्यायन्वरवरमुने ! तस्य ते विप्रयोगं।
मन्येऽनिद्रामरतिजनितां मानयत्यग्रजोऽयम् ॥ ९० ॥

व्या०—सोदर्येष्विति ॥ हे वरवरमुने ! त्वं सौमित्रिरूपस्त्वं यस्य रघुपतेः सोदर्येषु दशरथरूपैकपितृजातभ्रातृषु मध्ये दयितः अत्यर्थमिष्टः भृत्यः क्रयविक्रयार्हो दासः सुहृत् सखा, असि भवसि; वाशब्दः पक्षभेदद्योतकः रामाभिप्रायेण भ्रातृत्वसुहृत्त्वादिकं सौमित्र्यभिप्रायेण भृत्यत्वमिति अत एव "अवरो भ्राता गुणैर्दास्यमुपागतः" इत्यत्राऽभिसन्धिभेदेन व्याख्यातं द्रविडोपनिषद्भाष्ये । स त्वयि सहचरे सति त्वयि समक्षवृत्तिनि सति, जानकीविप्रयोगः प्रशस्ताभिजनश्लाघनीयाया मैथिल्यास्तृतीयविश्लेषः, यस्य सोढव्योऽभूत् येन रघुपतिना सहनार्होऽभूत् । तथाविधः मत्कुलधनभूतो रघुपतिः, तस्य ते तथाविधसौमित्रितादात्म्यवतस्तव, विप्रयोगं वियोगं, "विसर्जये त्वां सौमित्रे" इत्युक्तरीत्या स्वेनैवाऽऽपतितं विश्लेषं ध्यायन्ध्यायन्मुहुर्मुहुरुत्कण्ठापूर्वकं स्मृत्वा, अरतिजनितां सर्ववस्तुष्वप्रीतिरूपाऽरत्या जनितां निद्रां परागर्थाऽनुसन्धानाभावं मानयति सम्भावयति ( इति) मन्ये इति शङ्के मननमिह परागर्थानुसन्धानभावस्याऽविच्छेदेनाऽङ्गीकारः अत्र चाऽर्चावतारप्रयुक्तस्य परागर्थानुसन्धानाभावस्य विश्लेषध्यानहेतुकाऽरतिहेतुकनिद्रात्वोत्प्रेक्षा; अथवा मन्य इति स्वाभिप्रायकथनं 'सम्भेदेनाऽन्यतरवैय्यर्थ्यम्' इति न्यायेन परागर्थानुसन्धानाभावस्याऽर्चात्वप्रयुक्तत्ववत् विश्लेषप्रयुक्तत्वस्याऽप्युपपत्तेः ॥ ९० ॥

अ०—पूर्वस्मिन् श्लोके सौमित्रिरूपभवद्विप्रयोगाऽभावे भगवतस्सीताविप्रयोगस्याऽकिञ्चित्करत्वमुक्तम्, अस्मिन् श्लोके भवद्विप्रयोगे सति सीतासंश्लेषस्याऽपि अकिञ्चित्करत्वमुच्यते—



मू०—मुग्धालोकं मुखमनुभवन्मोदते नैव देव्याः ।
स्निग्धालापं कपिकुलपतिं नैव सिञ्चत्यपाङ्गैः ॥
त्वामेवैकं वरवरमुने ! सोदरं द्रष्टुकामो ।
नाथो नैति क्वचिदपि रतिं दर्शने यूथपानाम् ॥ ९१ ॥

व्या०—मुग्धालोकमिति ॥ हे वरवरमुने ! नाथः रघुपतिः, सोदरं भ्रातरं, सादरमिति पाठे स्वविषयकात्यर्थप्रीतियुक्तं द्रष्टुकामः इत्यत्र दर्शनविशेषणं वा; एकं मुखं त्वामेव सौमित्रिरूपं त्वामेव, एवकारेण सीता व्यावर्त्यते, द्रष्टुकामस्सन् साक्षात्कर्तुमत्यन्ताऽभिलाषयुक्तस्सन्, "संगात्सञ्जायते कामः" इत्यत्र भाषितरीत्या विषयानुभवातिरेके स्वरूपधारणदौर्लभ्याऽऽपादकाऽभिलाषविशेषपरोऽयं कामशब्दः । मुग्धालोकं सुन्दरलावण्यकं वा, आलोकस्तेजस्तच्च लावण्यं विवक्षितम् । देव्याः सीतायाः हिरण्यप्रतिकृतिरूपाया इति हृदयम्, मुखमनुभवन् पश्यन्, नैव मोदते मोदप्रसक्त्यापि शून्यो भवतीत्यर्थः । "कदा नु खलु बिम्बोष्ठं तस्याः पद्ममिवाऽऽननम् । ईषदुन्नम्य पास्यामि रसायनमिवाऽऽतुरः" इत्याशंक्य सायोगेज्यांऽपि त्वद्वियोगेन सीताप्रतिकृतिमपि न पश्यन्तीत्यर्थः । जानकीविश्लेषानन्तरमेव सौमित्रिविश्लेषात्तत्पूर्वं देव्या मुखानुभवप्रसक्तिर्हिरण्मय्या एव सम्भवतीत्येवं व्याख्यातम् । स्निग्धालापं स्नेहहेतुकमृदुवचनं, कपिकुलपतिं सुग्रीवम् । अपाङ्गैः नेत्राञ्चलैः,

१ सादरमिति पा० । २ सायोगेज्यापि इति पुस्तकद्वयेपि पाठो दृश्यते सम्यक्पाठः कोशान्तरेन्वेषणीयः संयोगे सत्यपि, इति तु सुष्ठु भाति ।

नैव सिञ्चति नैवाऽङ्गीकरोति । विरहविनोदनाय ताभिस्ताभिः कथाभिः लक्ष्मणवियोगदुःखं विस्मारयन्नपि सुग्रीवो रघुपतिना नेक्षित इति भावः । यूथपानां दर्शने ऐन्द्रव्याकरणपण्डितप्रमुखयूथपतीनाम्, साक्षात्कारे, क्वचिदपि उक्तेष्वनुक्तेषु सौख्यहेतुषु सर्वेषु वस्तुषु रतिं प्रीतिं नैति न प्राप्नोति । "तत्राऽपि बाष्पदिग्धश्चक्षुर्विनोदयामि" इत्युक्तरीत्या हिरण्मयसीताप्रतिकृतिकरणफलमुत्कण्ठाविनोदनमेव, न त्वानृशंस्यनिवर्तनम् नापि अश्वमेधादिसहचरीकरणम्; "यज्ञे यज्ञे च कुरुते सीताम्पत्नीं हिरण्मयीम्" इत्यत्र तु हिरण्मयीं सीतां यज्ञे यज्ञे पत्नीश्च कुरुते इत्यन्वयात्, अश्वमेधसहचरीकरणमानुषङ्गिकमिति लभ्यते । एतद्विषयो राणादिग्रन्थः, शिष्टकोपाधिकरणस्थोऽन्वाचयफलत्वपर इति हृदयम्॥९१॥

अ०—एवं भुंक्ते नैवेत्यारभ्य पूर्वश्लोकपर्यन्तेन सन्दर्भेण श्रीमति रामायणे सप्तानामपि श्लोकानामर्थाः क्रमेणाऽनुसंहिताः, चरमप्रधानेऽस्मिञ्शतके तदनुसन्धानश्चरमपर्वनिष्ठैः श्रीरामायणस्योपादेयतायां निबन्धनम् । चरमशेषिरूपवरवरमुनिवराभिन्नसौमित्रिप्रतिपादकत्वमिति व्यञ्जनार्थम् । अन्यथा चरमपर्वप्रवणस्य कर्तुस्तदनुसन्धानाऽसंगतेः, अत एव "काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्" इत्युक्तरीत्या श्रीरामायणप्रधानप्रतिपिपादयिषिताया अपि सीतायाः पूर्वं रामलक्ष्मणसीताभिः इत्यनुक्रमणिकां

१ राणादिग्रन्थः प्रबन्धविशेषः । २ पूर्वमीमांसायाम् । ३ रघुवरचरितमित्यनेनाऽस्य श्लोकस्य विरोध इति न शंकनीयम्, अस्मिन्श्लोके कृत्स्नं, इति विशेषितत्वेनान्यस्याऽऽप्रधानतया प्रतिपाद्यत्वेप्युपपत्तेः विस्तरेण श्रीवचनभूषणमीमांसायामयमर्थो द्रष्टव्यः ।



सर्गे सौमित्रिनिर्देशः कृत इति ध्येयम् । एवमस्मिन् श्लोके रामावतारे सर्वप्रकारस्वपरिचरणकर्तृसौमित्रिविषये स्वयमेव तथाविधपारिचरणानि कर्तुमभिलषन् "कथञ्चिदुपकारेण कृतेनैकेन तुष्यति" इत्युक्तस्वभावविशेषशालितया निरंकुशस्वतन्त्रतया च तादृशस्वभावस्वातन्त्र्यपरिणामभूतं पारतन्त्र्यविशेषमंगीकृत्य सौमित्र्यवतारभूतबलभद्ररामानुजरूपेण कृष्णावतारमङ्गीचकार भगवानिति वदन् चरमपर्वनिष्ठैर्भारतादेरपि उपादेयतामूलमुक्तविधमेवेति व्यञ्जयन्नितःपरं मा कदापि स्याद्भगवतस्त्वाद्विश्लेष इत्याह—

मू०—एवं देवः स्वयमभिलषन्नेष ते शेषवृत्तिं ।
जज्ञे भूयस्त्वदनुजगदानन्दनो नन्दसूनुः ॥
दूरीभावं वरवरमुने ! दुस्सहं पूर्वजस्ते ।
धन्यस्त्यक्त्वा धयतु न चिराच्चक्षुषा राघवस्त्वाम्॥९२॥

व्या०—एवमिति ॥ हे वरवरमुने ! देवः सर्वेश्वरः, ते पूर्वजः सौमित्रिरूपस्य तवाऽग्रजः राघवः, ते शेषवृत्तिं सर्वप्रकारहृदयंगमस्य तव सर्वविधां पारिचर्यां त्वत्सन्तोषकारिणीम्परिचर्यामित्यर्थः । एवं त्वत्कर्तृकतद्विषयकपरिचर्यासाररूपेण "क्रियतामिति मां वद" इतिवक्तृत्वन्नियोगपुरस्सरत्वादिरूपधर्मवैशिष्ट्येनेत्यर्थः । स्वयमभिलषन् उक्तस्वभावविशेषस्वातन्त्र्यविशिष्टत्वेन स्वेनैवाऽभिलषन् अत्यन्तमपेक्षमाणस्सन्, जगदानन्दनः जगतः प्रथमचरमपर्वनिष्ठोभयविधजनसमुदायरूपस्य, आनन्दनः अत्यर्थप्रीतिहेतुभूतः, नन्दसूनुः दौत्यसारथ्याद्यर्वाचीनव्यापारोऽनुभिषिक्तक्षत्रियवंशजन्मपूर्वकगोपज-

न्मयुक्तः कृष्णस्सन्; भूयः पुनश्च, त्वदनु त्वत्तः पश्चात, जज्ञे जातः त्वदनुजतया पुनरवतीर्ण इत्यर्थः। अयम्भावः—अभिषिक्तक्षत्रियवंशतया दुर्लभदौत्यसारथ्यपरः, तदर्थं तद्योग्ययदुकुलजन्मपूर्वकनन्दसूनुत्वावतारवत् अग्रजतया त्वद्विषयकपरिचरणदौर्लभ्येन दूयमानो रघुपतिः, तद्योग्यत्वदनुजरूपेणाऽवतारं कृतवानिति; 'रघुपतिदौत्यकृष्णावतारांगीकृत' इति कलिमथनसूक्तिप्रमाणकभट्टपराशरश्रीसूक्तिप्रदर्शकद्रविडोपनिषद्भाष्यादवगन्तव्यम् 'जगदानन्दन' इति पूर्वानुक्तस्याऽत्रोक्त्या कृष्णावतारे ग्रन्थकारस्य प्रावण्यं स्वशेषिशेषत्वमूलकमिति व्यञ्जितम्, ते पूर्वजो राघवः दुस्सहं सर्वशक्तिना स्वेनाऽपि सोढुमशक्यम्, ते दूरीभावम् तव श्रीरंगनगरावस्थानप्रयुक्तं त्वद्विप्रकर्षम्, त्यक्त्वा धन्यस्सन् त्वदात्मकमहाधनलाभवान्सन्, चक्षुषा तदीयविशाललोचनेन, न चिरात् अविलम्बेन, त्वां धयतु पिबतु। एवं पूर्वपूर्वावतारेष्वपि त्वद्वियोगाऽसहो रघुपतिरिदानीं मम गृहार्चारूपत्वेऽपि "कृत्यैरन्यैः किमिह तदिदं कीर्तयेति ब्रवीति" इत्युक्तरीत्या त्वद्वियोगदुःखेन दूयते। अतस्त्वामागतमालोकमानोऽत्यर्थप्रीत्या तृप्यतामिति प्रार्थना।इयञ्च प्रार्थना दुर्भिक्षे स्वयं क्षुधार्तस्य कारुणिकस्य स्वसम्बन्धिजनार्थमन्नप्रार्थनावदिति ॥ ९२ ॥

अ०—पूर्वस्मिन् श्लोके त्वदग्रजभूतरघुवराभिनन्दनार्थं भवताऽत्रागन्तव्यमिति प्रार्थितम्; अस्मिञ्छ्लोके तदर्थं त्वय्यागते ममाऽपि पुरुषार्थस्स्यादित्याह—

मू०—पायम्पायं प्रणयमधुरे पादपद्मे त्वदीये।
पश्येयं तत्किमपि मनसा भावयन्तं भवन्तम्॥



कामक्रोधप्रकृतिरहितैः कांक्षितत्वत्प्रसादैः।
सद्भिस्साकं वरवरमुने! सन्ततं वर्तिषीय ॥ ९३ ॥

व्या०—पायम्पायमिति ॥ हे वरवरमुने ! प्रणयमधुरे मदीयपरमभक्तिविषयप्रणयेन मधुरे मकरन्दयुक्ते; मधुशब्दान्मत्वर्थीयो रप्रत्ययः "ऊषसुषिमुष्कमधो रः" इत्यनुशासनात्। त्वदीये प्राप्तशेषित्वत्सम्बन्धिनि पादपद्मे पादलक्षणपद्मे पावनत्वभोग्यत्वादिना रूपकम्। पायम्पायम् मुहुर्मुहुः पीत्वा, दर्शनस्य पानत्वोक्त्या निगीर्याऽध्यवसानाद्रूपकातिशयोक्तिः मनसा दिव्यहृदयेन, किमपि किञ्चिदपि तत् तादृशम्, सर्वपुरुषार्थविलक्षणं स्यादसौ इत्येतादृशमर्थं भावयन्तं संकलयन्तं भवन्तं पश्येयं साक्षात्करवाणि; यत एवं ततः कामः अप्राप्तविषयेषु इच्छा, क्रोधः तद्विघातजनकेषु मनःप्रज्वलनम्, इदञ्च लोभादीनामप्युपलक्षणम्। एताभ्यां प्रकृत्या रहितैः स्वभावतः शून्यैः कांक्षितत्वत्प्रसादैः आशंसितभगवत्कर्तृकानुग्रहैः सद्भिः त्वन्निर्हेतुककटाक्षलब्धसत्ताकैर्महापुरुषैः साकं सह सन्ततम् अविच्छेदेन वर्तिषीय वर्तमानो भवेयम्, अत्र 'पायम्पायम्' इत्यादिना सन्दर्भेण "सतु रामस्य धर्मात्मा निपपात विभीषणः। वरणान्वेषी" इत्युक्तविभीषणस्फोर्यते पश्येयं तादित्यादिना "तस्य तद्वचनं श्रुत्वा रामो वचनमब्रवीत्। वचसा सान्त्वयित्वैनं लोचनाभ्याम्पिबन्निव" इत्यत्रोक्तिरिति व्यज्यते। कामक्रोधेत्यादिना "तस्मात्क्षिप्रं सहाऽस्माभिस्तुल्यो भवतु राघवः। विभीषणो महाप्राज्ञस्सखित्वमुपयातु नः" इत्युक्तिरिति व्यज्यते[1] ॥ ९३ ॥

१ इत्युक्तसरणिर्ध्वन्यते इति कपु० पाठः।

अ०—एवम्भूतप्राप्यत्वरातिरेकेण क्षुब्धहृदयोऽयं देवराजगुरुः प्राप्यत्वरातिशयेनाऽनन्यदेवत्वरूपस्वाधिकारविरुद्धकामदेवोपासनप्रवृत्तगोदान्यायेन चरमपर्वनिष्ठत्वरूपस्वाधिकारविरुद्धेऽपि श्रीशयोः पुरुषकारोपायत्वे प्रार्थ्यते—

मू०—पश्यत्वेनं जनकतनया पद्मगर्भैरपाङ्गैः
प्रारब्धानि प्रशमयतु मे भागधेयं रघूणाम् ॥
आविर्भयादमलकमलोदग्रमक्ष्णोः पदं मे—
दिव्यं तेजो वरवरमुने ! देवदेव ! त्वदीयम् ॥ ९४ ॥

व्या०—पश्यत्विति॥हे वरवरमुने! देवानां नित्यसूरीणां देव शेषीभूत त्वद्विप्रकृष्टदेशास्थित इति सम्बोधनाभिप्रायः। जनकतनया "तुल्याभिलक्षणाम्" इत्युक्तरीत्या परमप्रेमास्पदत्वानिबन्धनाऽभिजात्य विशेषवती जनककुलसुन्दरी पद्मगर्भैः वातातपाद्यसंस्पृष्टत्वेनाक्ष्णोस्सौन्दर्यसौकुमार्ययुक्तकमलोदरत्वेन रूपणीयैः। अपाङ्गैः नेत्राञ्चलैः एनं पूर्वश्लोकेषूपस्थितरघुपतिं मे पश्यतु मदर्थं पश्यतु। असितेक्षणापाङ्गानां पद्मगर्भसादृश्यं पुरुषकारत्वोपयुक्तभगवद्विषयकात्यर्थानुरागप्रयुक्तक्षोभत्वसूचनार्थम्। एवंविधदुर्गतिमत्यपि चेतने भगवतो रक्षणौदासीन्यप्रयुक्तप्रणयरोषनिमित्तकं वा रघूणां भागधेयम् "यो मन्त्रं तपसा लेभे" इत्युक्तरीत्या शरणागतसंरक्षणदीक्षितो रघुकुलभाग्यपरिपाकभूतो रघुपतिः मे जनककुलसुन्दरीपुरुषकारस्य मम प्रारब्धानि त्वदनुभवविरोधीनि अनुभवेन विना दुर्निवर्त्यानि दुरितानि, प्रशमयतु सवासनं नाशयतु। यत एवं ततः अमलकमलोदग्रम् निर्मलपुण्ड



रीकादपि अतिशयितम् दिव्यं तेजः अप्राकृतं तेजः, तेजःप्रचुरत्वात् तेज इति व्यपदेश्यम्। त्वदीयं पदं चरणं मे अक्ष्णोः आविर्भूयात् चिरोत्कण्ठितयोर्मम नयनयोः प्रकाशताम्। अथवा अमलकमलोदग्रं त्वदीयं दिव्यं तेजः त्वदीयमङ्गलविग्रहदिव्यलावण्यप्रसरः मे अक्ष्णोः पदमाविर्भूयात् मदीयनयनगोचरो जायताम् ॥ ९४ ॥

अ०—सोढुं तावदित्यादिश्लोकेषु रघुपतिजनककुलसुन्दरीसौमित्रीणां परस्परविप्रयोगस्याऽनुसंहितत्वेन कलुषहृदयस्सन् इतः परं मा कदापि वियोगस्तेषां भूदिति मंगलाशासनं कुर्वन् सौमित्रिवरवरमुन्योरभेदं स्फुटयति—

मू०—रामः श्रीमान्रविसुतसखो वर्द्धतां यूथपालै-
र्देवी तस्मै दिशतु कुशलं मैथिली नित्ययोगात् ॥
सानुक्रोशो जयतु जनयन् सर्वतस्तत्प्रसादं।
सौमित्रिर्मे स खलु भगवान्सौम्यजामातृयोगी॥ ९५ ॥

व्या०—राम इति॥श्रीमान्उभय विभूतिनिर्वाहकः 'श्रीः' भोग्यवस्तुसमृद्धिः तद्वान् रविसुतसखः सुग्रीवस्य मित्रम्; आभ्यां विशेषणाभ्यां "लोकनाथः पुरा भूत्वा सुग्रीवं नाथमिच्छति" इत्यर्थो व्यञ्जितः अत एव [1]परत्वसौलभ्ये च व्यञ्जिते। रामः रमते रमयतीति वा रामः, आद्ये "ज्वलितिकसन्तेभ्यो०" इति सूत्रेण कर्त्रर्थेणप्रत्ययः द्वितीये "रामो रमयतां वरः" इत्येतदनुसारात् णिजन्तात् पचाद्यच् प्रत्ययः। अनेन मङ्गलाशासनप्रयोजकदिव्यमंगलविग्रहवैलक्षण्यादिकमुक्तं,

१ उभयविभूतिनिर्वाहकत्वम्परत्वम्, रविसुतसखित्वं सौलभ्यम्।

यूथपालैः गदाप्रभृतिभिःस्सह, वर्द्धताम् उत्तरोत्तरमुपचयं प्राप्नोतु। आशिषिलोट् आशीआशासनं "त्वयिकिञ्चित्समापन्नेकिङ्कार्यंसीतया मम" इत्युक्तभगवत्स्वभावविशेषपर्यालोचनया रविसुतादेरपि मंगलाशासनविषयकोटौ निवेशः।मैथिली जनकराजपुत्री देवी निरतिशयदीप्तिशालिनी, नित्ययोगात् क्षणमात्रविरहितस्वसंश्लेषाद्धेतोः, तस्मै पूर्वोक्तविशेषणविशिष्टाय रघुपतये, कुशलं योगक्षेमरूपं मंगलं दिशतु ददातु "अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" इत्युक्तरीत्या जनककुलसुन्दरीसम्बन्धायत्तो हि, रघुपतेस्सर्वविधोप्युत्कर्ष इति भावः। सानुक्रोशः दिव्यदम्पत्यपेक्षयाऽपि कृपाप्रचुरः सौमित्रिः तत्प्रयोजकोत्पत्तिविशेषवान्,शोभनं मित्रं यस्यास्तथोक्ता सुमित्रा,तस्या अपत्यमित्यर्थात्।मे मह्यम्, सर्वतः सर्वविधं "सार्वविभक्तिकस्तसिल्" तत्प्रसादं तयोर्दिव्यदम्पत्योः प्रसादं; उपायोपेयभूतप्रीतिविशेषं जनयन् प्रादुर्भावयन् सन्, जयतु सर्वोत्कर्षेण वर्द्धतां मंगलाशासनस्य स्वाधिकारविरोधम्परिहरति स खल्विति। सः सौमित्रिः, भगवान् सौम्यजामातृयोगी खलु भगवान् निर्दोषकल्याणकरः, सौम्य जामातृयोगी श्रीरंगनाथदिव्याभिधानरूपसौम्यजामातृसमाख्यैकनिरूपणीयः, योगी ज्ञानभक्तिवैराग्यादिसूचकोक्ताश्रमनिष्ठः खलुशब्दः सौमित्रिवरवरमुन्योरैक्ये प्रमाणप्रसिद्धिं द्योतयति प्रमाणञ्च प्रत्यक्षाऽनुमानाऽऽप्तवाक्यरूपं प्रत्यक्षं "शेषः श्रीमान" इति श्लोके व्यक्तम् अनुमानाप्तवाक्ये तु "नित्यम्पत्युः परिचरणतः" इति श्लोके व्यक्तमनुसन्धेये ॥ ९५ ॥

१ श्रीशैलाष्टके प्रथमश्लोकोऽयम्।



अ०—पुनरपि भावनाप्रकर्षवशात् "क्षमसे तन्महीपते" इत्युक्तजनककुलसुन्दरीन्यायेन परोक्षेऽप्यपरोक्षनिर्देशं कुर्वन् स्वाधिकारानुरूपपुरुषकारोपाययोर्मङ्गलाशासनं करोति—

मू०—यस्मादेतद्यदुपनिषदामप्रमेयं प्रमेयं।
कुर्वाणस्तत्सकलसुलभं कोमलैरेव वाक्यैः॥
नीरोगस्त्वं वरदगुरुणा नित्ययुक्तो धरित्रीं।
पाहि श्रीमन्! वरवरमुने! पद्मयोनेर्दिनानि ॥ ९६ ॥

व्या०—यस्मादिति ॥ हे वरवरमुने! एतत् धर्मिग्राहकप्रत्यक्षसिद्धविविधवैचित्र्ययुक्तं कृत्स्नं जगत्, यस्मात् यादृशभगवदुपादानकं यादृशभगवन्निमित्तकञ्च, अत्र 'गम्यमानानामपि प्रक्रिया विभक्तीनां प्रयोजिका' इत्युक्त्या पञ्चमीसिद्धिः "यतो वा इमानि भूतानि" इति श्रुत्यभिप्रायेणेदमुक्तम्। यत् श्रीमन्नारायणात्मकम् उपनिषदां सर्वेषामपि वेदान्तानाम्, अप्रमेयं कात्स्न्र्येन प्रमातुमशक्यं प्रमेयत्वे सति प्रमेयभिन्नत्वम् नञिवयुक्तन्यायेनाऽप्रमेयपदस्वारस्य लाभः इत्युक्तलाभात् निखिलजगज्जन्मादिकारणम् "यतो वाचो निवर्तन्ते" इति वाङ्मनसातिवृत्तिनिरवधिमहिमयुक्तम्, नित्यनिर्दोषशास्त्रैकसमधिगम्यं परमपुरुषरूपं परंब्रह्मकर्म कोमलैरेव वाक्यैः अतिसुकुमाररचनैरत्युदारार्थगर्भैः स्वैरालापप्रायैर्वाक्यैः एवकारेण प्रयुक्तगौरवं व्यावर्त्यते सकलसुलभं प्रमेयं कुर्वाणः अज्ञसर्वज्ञविभागानादरेण सकलजनसुलभम् यत्प्रमारूपं ज्ञानं तद्विषयं कुर्वाणः, सकलसुलभमितीदं प्रमेयपदान्तर्भूतप्रमाक्रियाविशेषणम्। कुर्वाण इत्या

त्मनेपदेन स्वप्रयोजनमनभिसन्धाय कृषिं करोतीति व्यज्यते । वरद गुरुणा नित्ययुक्तः मत्पुरुषकारभूतेन त्वदत्यर्थप्रियेण वरदनारायण गुरुणा नीरन्ध्रसम्बन्धवान् त्वं पद्मयोनेः दिनानि "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते" इत्युक्तब्रह्मदिवसेषु सर्वेष्वविच्छेदेन, धरित्रीम् अन्यथा ज्ञानादिहेयतमतमःप्रचुरां महापृथिवीं नीरोगः सन् नित्या रोग्यवान् सन् "आयुराशास्ते" इतीयमाशीः । पाहि अन्यथाज्ञाना दिरूपाऽनिष्टनिवर्तनेन ज्ञानभक्तिवैराग्यादिरूपेष्टप्रापणेन च पालये- त्यर्थः ॥ ९६ ॥

अ०—तेनैव भावनाप्रकर्षेण प्राप्तिदशातुल्यहर्षातिशयं नर्तनेन साक्षीकुर्वन् तदनुकूलतालाभानुकारिवृत्तविशेषेण श्लोकानाह—

मू०—वरवरमुनिवर्य चिन्तामहन्तामुषं तावकी-<br>
मविरतमनुवर्तमानानुमानावमानानिमान् ॥<br>
निरुपधिपदभक्तिनिष्ठाननुष्ठाननिष्ठानहं ।<br>
प्रतिदिनमनुभूय भूयो न भूयासमायासभूः ॥ ९७ ॥

व्या०—वरवरमुनिवर्येति ॥ हे वरवरमुनिवर्य तावकीं त्वद्विष याम् अहन्तामुषं स्वस्वातन्त्र्यज्ञानात्मकाहङ्कारनिवर्तनीम्, 'मुष स्तेये' अस्मात् क्विपि प्रत्ययः स्तेयोक्त्याऽज्ञातनिवर्तकत्वं गम्यते । चिन्तां स्मृतिम्, अविरतं क्षणमात्रविच्छेदराहित्येन अनुवर्तमानाननुसरतः एतेन वरवरमुनिवर्यचिन्तां प्रति शेषित्वं तेषान्न तु तच्छेषत्वं चिन्ताया इति अत्यन्तपारतन्त्र्यं चिन्तायां व्यज्यते । अथवा, चिन्तामनु चिन्तांप्रति वर्तमानान् वृत्तिमतः वृत्तिः शरीरधारणोपायः, तथा च त्वद्विषयानुस्मृतिज्ञाप्यशरीरधारणवत इत्यर्थः । एतेन लौकिका-



न्नपानादिनैरपेक्ष्यं प्रतीयते । अत एवमानावमानान् मानं सम्भा- वना, अवमानं तिरस्कारः; अर्थकामादिनैरपेक्ष्येण तद्धेतुभूताभ्यां पुरस्कारतिरस्काराभ्यां कर्तृतया कर्मतया च रहितान्, इमान् उक्तविधया प्रत्यक्षसिद्धान् । उपधेरुपाधेर्निर्गता निरुपधिः, उपाधिश्चेह स्वप्रयोजनपरत्वादिकम्, तच्छून्येत्यर्थः । तथाविधायां पदभक्तौ स्वरूपानुरूपचरणविषयकात्यर्थानुरागे, निष्ठान् नितरां स्थितिमतः, अनुष्ठाननिष्ठान् तादृशभक्तिप्रेरितसकलविधकैंकर्य- निष्ठान्, प्रतिदिनं यावत्कालम्, अनुभूय निरतिशयप्रीतिविषयी- कृत्य तद्विषयप्रीतिमान् भूत्वेत्यर्थः । अहम् उक्तप्रकारेण चरमविष- यप्रावण्ययुक्तोऽहं भूयः— पुनः, आयासभूः अप्राप्तविषयप्रावण्य- रूपदुःखावासभूमिः न भूयासं न भवितुमाशंसे । अत्राऽहन्तामुष मित्यनेन स्वशेषित्वरूपस्वस्वातन्त्र्यनिवर्तकप्रणवार्थोऽनुसंहितः । पदभक्तिनिष्ठानित्यनेन नमश्शब्दार्थोऽनुसंहितः । भयो न भूयास- मायासभूः इत्यनेन कैंकर्यप्रार्थनागर्भरूपनारायणशब्दार्थोऽनुसंहितः एवं मूलमन्त्रस्य चरमार्थपरपदत्रयार्थोऽनुसंहितः ॥ ९७ ॥

अ०—श्रीभगवद्रामानुजाचार्यविमुखजनविषयकवैमुख्यरूपमुख्य- धर्मानुवर्तिनः वरवरमुनिसम्बन्धिनो महानुभावाननुभवति—

मू०—वरवरमुनिवर्यपादावुपादाय सौदामिनी-<br>
विलसितविभवेषु वित्तेषु पुत्रेषु मुक्तेषणाः ॥<br>
कतिचन यतिवर्यगोष्ठीबहिष्ठीकृतष्ठीवना ।<br>
विजहति जनिमृत्युनित्यानुवृत्त्या यदत्याहितम् ९८॥

व्या०—वरवरमुनिवर्यपादाविति ॥ वरवरमुनिवर्यपादौ चरमशे- षिभगवद्वरवरमुनिचरणौ, उपादाय उपायोपेयभावेन स्वीकृत्य,

सौदामन्याः सुदामनामकपर्वतविशेषदिग्वर्त्तिन्यास्तडितो विलसितमिव विलसितं येषां तथोक्तेषु विभवेषु गृहक्षेत्रवाहनादिरूपेषु; अनेन कादाचित्कत्वञ्च द्योत्यते, वित्तेषु धनेषु पुत्रेषु दुहितरश्च पुत्राश्च पुत्रास्तेषु; यद्यपि "कन्यापितृत्वं दुःखाय" इति वर्तते । तथाऽपि "पुत्राच्छतगुणा पुत्री यदि पात्रे प्रदीयते" इत्यादेस्सत्वात् अदोषः । सौदामिनीतुल्यमपि स्थैर्यं वित्तादेर्नास्तीति तद्विशेषणाऽनुक्तिः पुत्रेषु वित्तेष्वित्याभ्यां साहचर्यात विभवशब्दः क्षेत्रादिपरः मुक्तेषणाः उक्तविधवस्तुत्रयविषयताऽभिलाषशून्या इत्यर्थः । आभ्याम्पदाभ्यां "परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि" "सा तं समासाद्य विशुद्धसत्त्वा" इत्यादिरीत्या वरवरमुनिवरसम्बन्धफलं वैराग्यादिकमित्युक्तं भवति यतिवर्यस्य भगवतो रामानुजस्य, गोष्ठीभिः दिव्यपरिषद्भिः, बहिष्ठीकृतेषु बहिष्कृतेषु पुरुषाधमेषु, ष्ठीवनं जुगुप्साव्यञ्जकलालानिरसनं यैस्ते तथोक्ताः; ष्ठीवन्तीति वा ष्ठीवनाः, नन्द्यादित्वात्कर्तरि ल्यु प्रत्ययः 'ष्ठिवु निरसने' इति धातुः। तद्विषयेऽत्यन्तजुगुप्सावन्त इत्यर्थः। कतिचन "स महात्मा सुदुर्लभः" "न लभ्यतेऽधिकारी वा" इत्युक्तरीत्या द्वित्रा महापुरुषाः, जनिमृत्युनित्यानुवृत्त्या यदत्याहितम् जनिमृत्योर्जननमरणयोः, नित्यानुवृत्तिभिः नियताविच्छिन्नसम्बन्धैः आयत् प्राप्नुवत्, आयामवद्वा कारणदैर्घ्यात् कार्यदैर्घ्यम्, अत्याहितं महाभयं, नातस्तच्छब्दाध्याहारो वाक्यभेदश्च विजहति त्यजति विशेषश्च स्वसम्बन्धिनामपि भयस्य त्यागरूपं तथा च स्वेषां स्वसम्बन्धिनाञ्च यत्संसारभयं तन्मुञ्चतीत्यर्थः ॥ ९८ ॥

अ०—स्वोद्देश्यवरदनारायणगुरुप्रतिपादनद्वारेण तत्प्रभृतीननुभवति—

मू०—निरवधिनिगमान्तविद्यानिषद्यानवद्याशयान् ।
यतिपतिपदपद्मबन्धानुबन्धानुसन्धायिनः ॥
वरवरमुनिवर्यसम्बन्धसम्बन्धसम्बन्धिनः ।
प्रतिदिनमनुभूय भूयो न भूयासमायासभूः ॥ ९९ ॥



व्या०—निरवधीति ॥ निरवधेः निस्सीमायाः, निगमान्तविद्यायाः निषद्या—वेदान्तविद्याया वेदिकास्थानभूतः अनवद्यः स्वस्व[1]शिष्यफलेषु प्रतिपत्तिविपर्यासहेतुभूतमिश्रसत्त्वरूपदोषशून्यः; परमसत्त्वयुक्त इति हृदयोऽर्थः । आशयः हृदयं येषां तथोक्ताः, तान्; अनेन "सकलवेदान्तसारार्थपूर्णाशयम्" इत्युक्तवरदनारायणगुरुविषयकाऽभिप्रायः कवे[2]र्व्याञ्जितः यतिपतिपदपद्मबन्धानुबन्धानुसन्धायिनः भगवद्रामानुजचरणकमलमेव स्वोज्जीवनहेतुताऽध्यवसाययुक्तान्, वरवरमुनिवर्यसम्बन्धसम्बन्धसम्बन्धिनः वरवरमुनिवर्यदासदासदासान्, प्रतिदिनम् अनुभूय आयासभूः भूयो न भूयासं, पुनरपि आयासभूर्न भवितुमाशंसे ॥ ९९ ॥

अ०—तत्सम्बन्धिप्रस्तावात्तदीयदिव्यनक्षत्रवैलक्षण्यमनुभवति—

मू०—यन्मूलमाश्वयुजमास्यवतारमूलं ।
कान्तोपयन्तृयमिनः करुणैकसिन्धोः ॥
आसीदसत्सु गणितस्य ममाऽपि सत्ता-

---

१ स्वामिनि विपरीतप्रतिपत्तिः 'अहमाचार्य' इत्यादिरूपा।शिष्येषु विपरीतप्रतिपत्तिः 'ममाऽयं शिष्यः' इत्यादिरूपा । फलेषु विपरीतप्रतिपत्तिश्च स्वशरीरादिपोषणादिरूपा शिष्यधनैः। श्रीवचनभूषणे आचार्यप्रकरणे विप्रतिपत्तिप्रकारश्च विस्तरेणोक्तस्तत्र द्रष्टव्यः।

२ कविः देवराजगुरुः । "शठरिपुरेक एव कमलापतिदिव्यकविर्मधुरकविर्यथा च शठजिन्मुनिमुख्यकविः । यतिकुलपुङ्गवस्य भुवि रङ्गसुधाकविराट् वरवरयोगिनो वरदराजकविश्च तथा" इति श्रीप्रतिवादिभयंकरार्यश्रीसूक्तिदर्शनेन कवेरित्युक्तम् । अत एव अन्यप्रणीतग्रन्थान्तरानादरपूर्वकं श्रीदेवराजगुरुवरप्रणीतप्रबन्धानेव सर्वेऽप्याचार्याः सर्वदिव्यदेशेषु स्वस्वगृहेषु च पठन्ति ।

मूलं तदेव जगदभ्युदयैकमूलम् ॥ १०० ॥

व्या०—यन्मूलमिति ॥ आश्वयुजमासि तुलामासि, यन्मूलं याद्दशं मूलनक्षत्रम्, करुणैकसिन्धोः कृपायाः अद्वितीयनिलयस्य कान्तोपयन्तृयमिनः वरवरमुनिवर्यस्य, अवतारमूलम् आसीत् दिव्यावतारहेतुरासीत्; तदेव ताद्दशदिव्यमूलनक्षत्रमेव, एवकारेण वरवरमुनेरपि अनपेक्षा गम्यते । अस्तु गणितस्य वरवरमुनिवरसम्बन्धविरहेण नष्टस्वरूपेषु गणितस्य प्रथमोद्दिष्टस्य, ममाऽपि सर्वशक्तिनाऽपीश्वरेण दुश्शकस्वरूपनिष्पत्तिकस्य मम सत्तामूलम् "सन्तमेनं ततो विदुः" इत्युक्तविलक्षणाऽस्तित्वकारणं, जगदभ्युदयैकमूलं जगन्मंगलस्य मुख्यहेतुभूतम्, आसीत् अभवत् स्वद्दष्टान्तेन जगतोऽप्यभ्युदयहेतुत्वमुक्तं पुरुषमूलस्य राज्यपरिपालनहेतुत्वमित्येतत्समाना[१]र्थकद्रविडोक्तिस्स्मार्यते ॥ १०० ॥

अ०—पुनरपि भंग्यन्तरेण तदेवानुसन्धत्ते—

मू०—मूलं शठारिमुखसूक्तिविवेचनायाः ।
कूलं कवेरदुहितुस्समुपागतस्य ॥
आलम्बनस्य मम सौम्यवरस्य जन्म ।
मूलं विभाति सतुलं वितुलञ्च चित्रम् ॥ १०१ ॥

व्या०—मूलमिति॥ शठा[१]रिमुखानां परांकुशपरकालयतिवरादीनां सूक्तीनां द्रविडोपनिषत्प्रभृतिरूपाणां निर्दोषगुणयुक्तवचनानां विवेचनायाः विलक्षणव्याख्यानस्य, मूलं हेतुभूतमिदं जन्ममूलमित्यत्रान्वेति कवेरदुहितुः कूलं समुपागतस्य कावेर्यास्तटं श्रीरंगनगरभूतं श्रीवैकु-

१ पांचरात्रे पौष्करसंहितायामेकोनविंशपरिच्छेदे शठारिः इति नामधेयस्य हेतुत्वम्प्रपञ्चितन्तत्र द्रष्टव्यम् वैखानसकारिकायाञ्च "कोपाग्निना शठं दग्ध्वा वैष्णवी पादुकाऽसुरम् ॥ शठकोप इति व्याख्यां प्राप्तो मुनिगणैर्भुवि" इत्यादि ।



ण्ठात्मासस्य, मम आलम्बनस्य प्रपतिष्यतो मम पतनप्रतिबन्धकसम्बन्धवतः सौम्यवरस्य कान्तोपयन्तुः, जन्ममूलं दिव्यावतारदिव्यनक्षत्रं समुपागतस्येत्युक्तेः जन्मशब्दोऽवतारपरः समुपागतस्येत्यनेन उपागतस्य सामीचीन्यमुच्यते । तच्च चेतनानुग्रहमूलकत्वरूपम्, अतः कर्ममूलकत्वव्युदासात् अवतारत्वसिद्धिः । सतुलं वितुलञ्च सत् चित्रम् विभाति तुलासाहित्यराहित्ययोरेकत्र समावेशात् विस्मयजनकत्वेन भातीति विरोधाभासः । सतुलं तुलामाससहितं, वितुलं निस्समाभ्यधिकं, चित्रं चेतनसंरक्षकमिति विरोधपरिहारः । चित्रतस्त्रायत इति चित्रम् 'आतोऽनुपसर्गे' इति कप्रत्ययः अत्र प्रासालंकारस्य विरोधाभासस्य च संसृष्टिः ॥ १०१ ॥

अ०—एवं सम्बन्धसम्बन्धिपर्यन्तं वरवरमुनेः स्वरूपरूपादिकमनुसन्धाय तद्वैलक्षण्यानुसन्धानजनिततदनर्थातिशंकया मंगलाशासनं 'श्रीमद्रंगं जयतु परमं धाम तेजोनिधानम्' इत्यादिस्तोत्रोपक्रमानुसारेण 'यतिवरतत्त्वविदे नमो नमस्ते' इति स्तोत्रोपोद्घातोपक्रमानुसारेण च स्तोत्रं निगमयति—

मू०—जयतु यशसा तुंगं रंगं जगत्त्रयमंगलं ।
जयतु सुचिरं तस्मिन्भूमा रमामणिभूषणम् ॥
[१]वरदगुरुणा सार्द्धं तस्मै शुभान्यभिवर्द्धयन् ।
वरवरमुनिः श्रीमान्रामानुजो जयतु क्षितौ ॥ १०२ ॥

१ भगवदाश्रयणे श्रियं पुरस्कृत्यैवाऽऽश्रयणं कार्यम् विभीषणवत् । अन्यथा शूर्पणखारावणादिवत् आनर्थक्यमेव पर्यवस्यति । तथा श्रीवरवरमुनिचरणसमाश्रयणवेलायामस्मदादीनां तन्नित्यसंयुक्तवरदनारायणगुरुपुरस्करणं कार्यमिति वरदगुरुणा सार्द्धमित्यनेन लभ्यते यथा गुरुपरम्परानुसन्धानसमये योनित्यममिति श्लोकेन सह पादुके श्रीवत्सेति श्लोकद्वयं पठन्ति तथा श्रीशैलेशेत्यनेन "सकलवेदान्तसारार्थपूर्णाशयं विपुल—

व्या०—जयत्विति ॥ यशसा नित्यसूरिषु प्रधानभूतस्य शेषस्य स्वरूपेण स्वावतारभेदैश्च नियतसन्निधानप्रयुक्तगुणवता प्रधाय, तुंगम् उत्कृष्टं जगत्त्रयस्य कृतक-अकृतक-कृतकाऽकृतकरूपत्रिविधस्य भुवनस्य, अथवा, प्रयोजनान्तरपराऽनन्यप्रयोजनचरमाधिकारिरूप-त्रिविधचेतनस्य मंगलम् अलंकारभूतम्, उपादेयपुरुषार्थभूतं वा; रंगं श्रीरंगराजाभिमतिविषयीभूतं श्रीरंगनगरं जयतु अनुपप्लवेन वर्तताम् । 'जी जये' जयः उत्कर्षप्राप्तिः सा चेहाऽनुपप्लवरूपा विवक्षिता । अनेन श्रीमद्रंगमित्यादेरर्थ उक्तः । तस्मिन् तादृशश्रीरंगनगरे, रमामणि-भूषणम् "भर्ता नाम परं नार्या भूषणादपि भूषणम्" इत्युक्तरीत्या श्रियो मरकतभूषणभूतं "श्रीस्तनाभरणं तेजः" इतिवत् भूमा "यत्र नान्यत्पश्यति नाऽन्यच्छृणोति नाऽन्यद्विजानाति स भूमा" इत्युक्तनिरतिशयस्वरूपः श्रीरंगनाथः सुचिरं यावत्कालतत्त्वं, जयतु अनुपप्लवेन वर्तताम् । अनेन भूमा तस्मिन् भवत्वित्यादेरर्थ उक्तः । रमामणिभूषणमित्युक्तिर्भूमेरप्युपलक्षणार्था अथवा, भूर्भूमिः मा लक्ष्मीः, रमा भगवती रतिमत्यो नीलागोदाप्रभृतयः; तासां मणिभूषणं रमन्त इति रमाः, यौगिकोऽयं शब्दः । पुनरुक्ति-महिम्ना रूढ्यानुन्मेषः, मा च सा रमेति वा मा रमाशब्दो लक्ष्मी-परः "पद्मानि यस्याग्रसरोरुहाणि प्रबोधयन्त्यूर्ध्वमुखैर्मयूखैः" इत्यत्रेवाऽत्राऽपि रूढ्यनुन्मेषो द्रष्टव्यः । यद्वा भूश्च मा च भूमे रमा च कौस्तुभमणिश्च भूषणं यस्य स रमामणिभूषणं भगवान्, भूमे च

—वाधूलगोत्रोद्भवानांवरम् । रुचिरजामातृयोगीन्द्रपादाश्रयं वरदनारायणं मद्गुरुं संश्रये" इति श्लोकश्चानुसन्धेय इत्यवगम्यते सारविद्भिरादरणीयोयं सदेति शम् ।



रमामणिभूषणानि च भूमारमामणिभूषणम् । समाहारे द्वन्द्वः प्राप्यत्व तुल्यत्वद्योतनाय द्वन्द्वनिर्देशः । प्रापकत्वगुणप्रधानाभावेन वैषम्यद्योतनाय विशेषणविशेष्यभावेन निर्देशः । अतो न भूमेरप्युपलक्ष्यत्वं मणिभूषणत्वञ्च भूमत्वानिगमनार्थमिति द्रष्टव्यम् । तस्मै प्रतिकूल-जनदुर्गमश्रीरंगवासिने, "अप्रमेयं हि तत्तेजः" इत्युक्तश्रीप्रभतिदिव्यमहिषीयुक्ताय, स्वधारकस्य सर्वानिष्टपरिहारसकलेष्टप्रापणक्षम-कौस्तुभमणिभूषणायाऽपि भगवते, शुभानि अनेकविधानि मंगलानि, वरदगुरुणा सार्द्धं वरदनारायणगुरुणा सह, अभिवर्द्धयन् सर्वत आशासनः, श्रीमान् रामानुजः मंगलाशासनरूपश्रीवैष्णवश्रीपरि-पूर्णभगवद्रामानुजाऽभिन्नः वरवरमुनिः, क्षितौ सत्त्वनिष्ठैस्स्वयं त्याज्यायामपि स्वसम्बन्धवशेन निवासयोग्यायां भमौ, जयतु अन-पप्लवेन वर्तताम् । क्षयन्ति निवसन्ति अस्यामिति क्षितिः; 'क्षि नि-वासगत्योः' तस्मै शुभानि अवर्द्धयन् इत्यनेन दिव्यं तस्मै दिशतु विभवमित्यस्याऽर्थ उक्तः, वरदगुरुणा सार्द्धमित्यनेन देशिको देशिकानामित्यस्याऽर्थ उक्तः । एवं स्तोत्रोपक्रमानुसारेण निगमनं कृतम् । श्रीमान् रामानुज इत्यनेन यतिवरतत्त्वविदे इति स्तोत्रोपोद्धातोपक्रान्तस्य निगमनं कृतं यतिवरतत्त्वम् अनारोपितरूपं रामानुजत्वं तेन विद्यत इति, यतिवरतत्त्ववित् 'विद सत्तायाम्' श्रीमान् रामानुजो वर-वरमुनिः इति निगमनस्वारस्यपर्यालोचनायां तत्रोक्तलाभः ॥ १०२ ॥

अ०—एवंविधस्य वरवरमुनिशतकस्याऽर्थानुसंधानपुरस्सरपठनेन स्वरूपानुरूपसम्पत्प्राप्तिस्वसम्बन्धिनामिष्टाऽनिष्टप्राप्तिपरिहारहेतुत्वं पुरुषस्य भवतीत्याह—

मू०—पठति शतकमेतत्प्रत्यहं यः सुजानन्[1] ।
स हि भवति निधानं सम्पदामीप्सितानाम् ॥
प्रशमयति विपाकं पातकानां गुरूणां ।
प्रथयति च निदानं पारमाप्तुं भवाब्धेः ॥ १०३ ॥

व्या०—पठतीति ॥ भाग्यातिशयवान् यादृशजनः एतत् शतकं शतश्लोकपरिमितं प्रबन्धं सुजानन्सन् , शब्दार्थयोर्माधुर्यं सम्यगनुसन्दधानस्सन् प्रत्यहं प्रतिदिनं पठति । कालक्षेपभोगयोर्हेतुतया क्षणमपि विहातुमशक्नुवानस्सन् अनुसन्धत्ते । स्वयम्प्रयोजनतया पठनशीलः पुरुषः ईप्सितानाम् आप्तुमिष्टानां सम्पदां चरमपर्वप्राप्तिपर्यन्तानां , निधानम् अक्षयाधिकरणं निधिर्ह्यनवरताऽऽदानेऽप्यक्षयो भवति निधानं भवति निधिर्भवतीत्यर्थः । स्वयं प्रयोजनशतकपठनंप्रति सम्पदां निधानीभवनस्याऽऽनुषङ्गिकत्वद्योतनाय हेतुहेतुमतोर्लिङः प्रयोगाभाव इति ध्येयम् । किञ्च—गुरूणां पातकानां महतामपि पातकानां विपाकं फलप्रदानौन्मुख्यं प्रशमयति। वासनया सह नाशयति। किञ्च—भवाब्धेःपारम् आप्तुं जननमरणपरम्परारूपसंसारसमुद्रस्योत्तरावधिभूतं मोक्षं प्राप्तुं निदानं मूलोपायं प्रथयति प्रकाशयति जनानामिति शेषः।यद्वा,गुरूणां भवाब्धेः पारमाप्तुं निदानं प्रथयति। आचार्याणां मोक्षमूलोपायं भगवद्रामानुजाचार्यं जनानां प्रकाशयतीत्यर्थः । स्वाचार्याणामपि भगवान्रामानुजः उत्तारक इति प्रसिद्धं तदुक्तं वेदान्ताचार्यैः "पत्युस्संयमिनां प्रणम्य चरणौ तत्पादकोटीरयोस्सम्बन्धेन समेधमानविभवान्धन्यांस्तथाऽन्यान् गुरून्" इति १०३॥

१ सुजन्मेति पुस्तकद्वयेऽपि मुद्रितमूलकोशे च. पा० ।



अ०—'स हि भवति निधानम्' इत्यत्र वक्तव्यमेतच्छतकपठनसन्तुष्टेन भगवता स्वयं प्रयोजनपठनशीलैः पुरुषैः पठनकृतावनुद्दिष्टानामपि सम्पदां प्रदानं तदिच्छामात्रप्रतीक्षया क्रियत इत्याह—

मू०—अनुदिनमनवद्यैः पद्यबन्धैरमीभिः—
वरवरमुनितत्त्वं व्यक्तमुद्घोषयन्तम् ॥
अनुपदमनुगच्छन्नप्रमेयः श्रुतीना—
मभिलषितमशेषं सयते शेषशायी ॥ १०४ ॥

इति श्रीसौम्यजामातृयोगीन्द्रचरणाम्बुजषट्पदैरष्टदिग्गजान्तर्भूतैश्चरमपर्वनिष्ठाग्रेसरैः श्रीदेवराजाचार्यगुरुवर्यैः प्रसादितं श्रीवरवरमुनिशतकं समाप्तम् ॥

---

व्या०—अनुदिनमिति ॥ श्रुतीनां नित्यवत् श्रूयमाणानां वेदानाम्, अप्रमेयः इदन्तया ज्ञातुमशक्यः, शेषशायी संसारिभिराश्रयणीयत्वाय श्रीरङ्गदिव्यनगरे श्रीमत्यनन्ते योगनिद्रारसिकः श्रीरंगनाथः, अनवद्यैः स्वानुरूपभाववृत्तिमूलकत्वविरहरूपदोषेण भ्रमप्रमादादिदोषैश्च रहितैः पद्यबन्धैः निबद्धपद्यैः पद्यशब्देन "शोकः श्लोकत्वमागतः" इति न्यायेन वरवरमुनिविषयानुभवपरिवाहोद्गतस्याऽस्य ग्रन्थस्य दैवाद्वर्णगणनातिसंख्यान्यूनाधिकभावविरहेण प्रवृत्तिरिति व्यज्यते। अमीभिः इत्यनेन बन्धवत्वप्रतिसन्धानं व्यज्यते। अनुदिनं वरवरमुनितत्त्वं वरवरमुनेरुपायोपेयत्वरूपं स्वरूपयाथात्म्यं व्यक्तं पण्डितपामरसाधारण्येन स्फुटप्रत्ये ( त्य) यं यथा भवति तथा उद्घोषयन्तम् उच्चैरुच्चारणेन प्रतिपादयन्तम् । तत्त्वपदेनास्य शतकस्य प्रशंसापरत्वं व्यावर्त्यते । उद्घोषयन्तमित्यत्र पुरुषमिति शेषः । अनु-

पदं पदेपदे अनुगच्छन्सन्, तद्विषयकात्यर्थप्रीत्या तमनुसरन् सन् अशेषमभिलषितं सर्वमभीष्टं सूयते उत्पादयति सूधातोर्दिवादित्वात् श्यन् प्रत्ययः। यद्वा, शेषशायी उद्घोषयन्तं पुरुषम् अशेषं यथा तथा, अनुगच्छन् अभिलषितं सूयते इत्यन्वयः । सौगन्ध्यसौकुमार्यादिभिः क्षणमपि नागपर्यङ्कमुत्स्रष्टुमशक्तो भगवान् वरवरमुनिशतकपठितारं पुरुषं शेषशय्याप्रहाणेनाऽनुगच्छन् तस्याऽभिलषितं विदधातीत्यर्थः। न विद्यते शेषो यस्मिन् कर्मणि तद्यथा भवति तथेत्यशेषं तथाविधमनुगमनं कुर्वन्नित्यर्थः "नागपर्यंक मुत्सृज्य ह्यागतः"इतिवत् अस्या योजनायाः पूर्वोक्तैव गरीयसी अत्र शेषशायी तत्त्वमुद्घोषयन्तमनुगच्छन् अभिलषितं सूयते इत्यनेन दिव्यप्रबन्धगाथागानशीलभक्तिसारानुगन्तृशेषशायियथोक्तकारिवृत्तान्तः प्रतीयत इति मन्तव्यम् १०४

श्लो०—योऽयं तत्त्वात्रितयमखिलं स्वायुतांशांशकेन साक्षात्कर्तुं
प्रभवति कवेर्भावबन्धो मुनीन्द्रे । तेनाऽनेन द्रुतगति-
मता दत्तहस्ताऽवलम्बस्सोऽयं ग्रन्थः किमपि तु मया
व्याकृतस्स्तोकवाचा ॥१॥ अतिगम्भीरभावस्य देव-
राजगुरोर्गिराम्। यथामति व्याक्रियातो व्यक्ता मद्बाध-
चित्तता ॥ २ ॥

इति श्रीमहीसारपुराधिष्ठितसकलशास्त्रविदग्रेसरश्रीवाधूलकुलतिलकश्रीवीरराघवाचार्यप्रसादितं श्रीवरवरमुनिशतकव्याख्यानं समाप्तम् ।

---

श्रीमानेष चिरञ्जीयात्सीमातीतगुणाम्बुधिः ।
रामानुजसदासेवी भूमौ श्रीवीरराघवः ॥ १ ॥



## ऐतिह्यविशेषः ।

अत्र केचिदाचार्या ऐतिह्यविशेषमामनन्ति, द्रविडोपनिषत्प्रतिपाद्यार्थविशेषान् श्रीवरवरमुनिवर्यः परांकुशार्यविषयतया 'तिरुवाय् मोऴिनूऱ्ऱन्दादि' प्रबन्धमुखेन प्रकटीचकार ।श्रीरामायणं लक्ष्मणपरतया श्रीवरवरमुनिशतकाख्यप्रबन्धरूपेणायं देवराजगुरुवर्यः प्रकाशयामासेति ।

इदं रहस्यं परया कृपया कृष्णसूरिणा ।
ममोपदिष्टं तोताद्रिमठे तेन महात्मना ॥

इदञ्च (८२) श्लो० आरभ्य (९२) श्लोकपर्यन्तव्याख्यानेषु स्पष्टमवगम्यते, तत्र "चरमप्रधानेऽस्मिन् शतके तदनुसन्धानञ्चरमपर्वनिष्ठैः श्रीरामायणस्योपादेयताया निबन्धनं चरमशेषिरूपवरवरमुनिवराऽभिन्नसौमित्रिप्रतिपादकत्वमिति व्यञ्जनार्थम्। अन्यथा चरमपर्वप्रवणस्य कर्तुस्तदनुसन्धानाऽसंगतेः इति प्रपञ्चितञ्च (९२ श्लो० अवतारिकायाम् ) ॥

---

श्रीमते रामानुजाय नमः । श्रीलोकगुरुवे नमः ।
श्रीवरवरमुनये नमः ।

# श्रीवरवरमुन्यष्टकम् ।

श्रीमाञ्छ्रीरंगनाथार्यो वेदान्तद्वयकेसरी ॥ मुनिः कान्तोपयन्ता मे सन्निधत्तां सदा हृदि॥ शेषः श्रीमानजनि हि पुरा सौम्यजातृयोगी भोगीभूतस्तदनु भगवान्राघवस्याऽनुजन्मा ॥ भूत्वा भव्यो वरवरमुनिर्भूयसा भासमानो रक्षत्वस्माद्रघुकुलपतेराश्रितो भद्रपीठम् ॥ १ ॥ श्रोतुं

द्राविडवेदभूरिविवृतिं सौम्योपयन्तुर्मुनेरुत्कण्ठास्ति म-
मैनमानय ततस्तार्क्ष्याश्रयं मण्डपम् ॥ आविश्याऽर्चकमू-
चिवानिति मुदा निश्शेषलोकान्वितः रंगी वत्सरमेकमे-
वमश्‍शृणोद्व्यक्तं तथोक्तं क्रमात् ॥ २ ॥ श्रीभूम्यां रंगनाथे
शठजिदुपनिषद्व्याक्रियां श्रोतृकामे शेषस्सन्तोषयि-
ष्यन्वरवरमुनितां प्राप्य यो वर्ततेऽग्रे ॥ काषायश्रीतु-
लस्यम्बुजमणिसुशिखाब्रह्मसूत्रत्रिदण्डैर्भान्तं शुभ्रोर्ध्व-
पुण्ड्रं स्मर हृदय ! सदा कोशमुद्राङ्कहस्तम् ॥ ३ ॥
कृपया परया स रंगराण्महिमानं महता प्रकाशयन् ॥
रुरुचे स्वयमेव चेतसा वरयोगिप्रवरस्य शिष्यताम्॥४॥
समाप्तौ ग्रन्थस्य प्रथितविबुधोपायनचये परं सज्जीभूते
वरवरमुनेरंघ्रिसविधे । हठाद्बालः कश्चित्कुत इति नि-
रस्तोऽप्युपगतो जगौ रंगेशाख्यः परिणतचतुर्हायन इद-
म् ॥ ५ ॥ श्रीमान्रङ्गेश्वरो यद्वकुलधरवचोभाष्यसारार्थ-
जातं श्रुत्वा सौम्योपयन्तुर्मुनिवरचरणे छात्रभावं प्रपन्नः।
श्रीशैलेशेति पद्यं खगपतिनिलये मण्डपे तत्समाप्तावु-
क्त्वाऽध्येतव्यमेतन्निखिलनिजगृहेष्वादिशत्तत्तदादौ ॥६॥
वेदादौ पूर्वमुक्त्वा हरिरिति सुजनो वक्ति पश्चादथोमित्येवं
वक्तव्यमेतद्वकुलधरवचोऽनुश्रवारम्भकाले । श्रीशैले-
शेतिपद्यं प्रथममथ सतां सम्प्रदायैकनिष्ठैर्लक्ष्मीनाथेति
पद्यं स्वयमथ भगवानादिशद्रंगनाथः ॥ ७ ॥ यद्वद्वक्तुं
न युक्तं प्रणवहरिपदाभ्यन्तरेऽन्यत्पदं तत्क्षणे तत्क-